चित्सुखाचार्यानुमानमप्याह-अनुभूतिरिति ॥

साध्यादेर्दुर्निरूपत्वान्नेदमनुमानं साध्वित्यर्वाचीनः प्रलपतीत्याह-अत्रेति ॥

पूर्वोक्तानुमाने-नवीनाक्षेपः ।

अत्र नवीनः—किमिदं स्वप्रकाशत्वम् । न तावद्वृत्त्यव्याप्यत्वम् । आत्मनोऽपि वृत्तिव्याप्यत्वात् । अन्यथा श्रवणादिवैयर्थ्यप्रसङ्गात् । नापि फलाव्याप्यत्वम् । अतीतादौ नित्यातीन्द्रिये चातिव्याप्तेः । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वम् । सुषुप्तिप्रलयादावात्मव्यवहाराभावेनाव्याप्तेः । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम् । मोक्षेऽव्याप्तेः । तदानीं योग्यतारूपधर्मस्याप्यभावात् । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वम् । मोक्षदशायां तस्याप्यभावात् । न हि तदा ब्रह्मण्यत्यन्ताभावानधिकरणत्वाख्यः कश्चिद्धर्मोऽस्ति । ब्रह्मणस्तथाभूतयोग्यत्वात्यन्ताभावाधिकरणत्वाच्च । अन्यथा ब्रह्मगततद्योग्यताया मिथ्यात्वन्न स्यात् । स्वात्यन्ताभावसमानाधिकरणस्यैव मिथ्यात्वात् । न च व्यावहारिको योग्यताऽत्यन्ताभावो ब्रह्मणि नेति वाच्यम् । ब्रह्मातिरिक्तस्य तस्य व्यावहारिकत्वात् । नापि ब्रह्मणोऽवेद्यत्वम् । तस्य वृत्तिवेद्यत्वात् ॥

तस्य प्रलापमेवाह-किमिदमिति । किं वृत्त्यव्याप्यत्वं स्वप्रकाशत्वम्, उत फलाव्याप्यत्वम्, अथवा वेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वम्, तद्योग्यत्वं वा, तद्योग्यत्वात्यन्ताभावानधिकरणत्वं वेति किंशब्दार्थः । आद्यं दूषयति । न तावदिति । केवलात्मनो न वृत्तिव्याप्यत्वमपीति मतमाशङ्क्याह-अन्यथेति । केवलस्यैव वेदान्ततात्पर्यगोचरत्वात् तद्विषयवृत्त्यभावे तच्छ्रवणादिवैयर्थ्यापातादित्यर्थः । द्वितीयं दूषयति नापीति । अभिव्यक्तचैतन्यं फलं तस्य तादात्म्येनावच्छेदकत्वम् । घटादेस्तद्व्याप्यत्वं, तदभावत्वं न स्वप्रकाशत्वम् । अतीतादेर्नित्यातीन्द्रियस्य वाऽभिव्यक्तचैतन्यतादात्म्याभावेऽप्यस्वप्रकाशत्वादित्यर्थः । तृतीयं दूषयति नाप्यवेद्यत्व इति । व्यवहाराभावेन तद्विषयत्वस्याप्यभावादिति शेषः । चतुर्थपञ्चमावप्यव्याप्त्या दूषयति-नाप्यवेद्यत्वे सतीत्यादिना । व्यवहारदशायामपि योग्यत्वात्यन्ताभावस्य ब्रह्मणि सत्त्वादसम्भवश्चेत्याह-ब्रह्मण इति ।

ननु तदा ब्रह्मणि तद्योग्यत्वमेव, न तदत्यन्ताभाव इत्याशङ्क्य तस्य मिथ्यात्वनिर्वाहार्थं तदभावोऽपि वक्तव्य इत्याह-अन्यथेति । ननु तद्योग्यताप्रतियोगिकव्यावहारिकात्यन्ताभावानधिकरणत्वमेव तल्लक्षणम् । ब्रह्मणि च न तद्व्यावहारिकात्यन्ताभावः प्रतियोगिसमानसत्ताकाभावस्य तत्सामानाधिकरण्यविरोधात् । किं तु पारमार्थिक एव तदत्यन्ताभावो ब्रह्मणि । तथा च नासम्भव इति चेन्न । ब्रह्मव्यतिरिक्तस्य पारमार्थिकत्वेऽद्वैतहानेः सोऽपि व्यावहारिको वाच्यः । ततश्च तत्समानसत्ताकयोरपि विरोधो ब्रह्मणोऽन्यत्रैव वाच्यः ।

तथा चासम्भव एवेत्यभिप्रेत्याह-न च व्यावहारिक इति । विशेष्यासम्भवमुक्त्वा विशेषणासम्भवमाह-नापीति । किमवेद्यत्वं वृत्त्यव्याप्यत्वं फलाव्याप्यत्वं वा? । नाद्य इत्याह-तस्येति ॥

न द्वितीय इत्याह-नापीति ॥

वृत्त्यव्याप्यत्वलक्षणं निरस्य फलाव्याप्यत्वं निरस्यति ।

नापि फलाव्याप्यत्वमवेद्यत्वम् । ब्रह्मणोऽपि चरमसाक्षात्कारवृत्तिप्रतिबिम्बितचैतन्यव्याप्यत्वात् । ननु वृत्तिबिम्बितचिदभिव्यक्तचैतन्याश्रयत्वं फलव्याप्यत्वं तच्च घटादावेव न ब्रह्मणीति चेन्न । घटादावपि वृत्तिविषयत्वव्यतिरेकेण तदभिव्यक्तचैतन्याश्रयत्वाभावात् । अपरोक्षव्यवहारश्च न तावदपरोक्षज्ञानजन्यो व्यवहारः । धर्मादावप्यलौकिकापरोक्षज्ञानजन्यव्यवहारस्य सत्त्वात् । अनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यसाक्षात्कारविवक्षायां स्वरूपज्ञानस्य नित्यत्वादसम्भवः । नाप्यपरोक्षोऽयमित्याकारो व्यवहारः । वस्तुनः अपरोक्षत्वम्-अपरोक्षज्ञानविषयत्वं चेद् घटादिवदात्मनोऽपि वेद्यत्वापत्तिः । अपरोक्षव्यवहारविषयत्वं चेद् वस्तुव्यवहारापरोक्षत्वयोरन्योन्यसापेक्षत्वादन्योन्याश्रयः, अभावे ऽतिव्याप्तिश्च । अस्ति हि गजाभावोऽपरोक्ष इति लोके व्यवहारः । अस्ति च फला-

व्याप्यत्वम् ॥

फलस्वरूपं वदन् ब्रह्मणस्तद्व्याप्यत्वमेव नेति शङ्कते-नन्विति । घटादावनित्यज्ञानविषयत्वव्यतिरेकेणानित्यज्ञानाश्रयत्वाभावात्तदेव फलं तद्विषयत्वं च ब्रह्मणोऽपि तुल्यमित्याह-न घटादाविति । किं च लक्षणवाक्यगतापरोक्षव्यवहारपदेनापरोक्षज्ञानजन्यो व्यवहारो विवक्षितः, लौकिकापरोक्षज्ञानजन्यो वा, अपरोक्षोऽयमित्याकारो वा ? । प्रथममतिव्याप्त्या दूषयति-अपरोक्षेति । द्वितीयमनूद्य दूषयति-अनागतेति । अनागतगोचरो यः साक्षात्कारः तद्धेतुभूता या प्रत्यासत्तिः सामान्यलक्षणादिरूपा तदजन्यश्च यः साक्षात्कारः लौकिकप्रत्यक्षमिति यावत् । तज्जन्यव्यवहारविवक्षायामित्यर्थः । ईश्वरज्ञानजन्यधर्मादिव्यवहारव्यावृत्तये जन्यपदम् । स्वरूपज्ञानस्य नित्यत्वादिति । तथा च लौकिकसाक्षात्कारजन्यव्यवहारविषयताभावादसम्भव इत्यर्थः । तृतीयमपवदति-नापीति । 'अपरोक्षोऽयम्'-इति व्यवह्रियमाणं विषयापरोक्ष्यं किमपरोक्षज्ञानविषयत्वमपरोक्षव्यवहारविषयत्वं वा ? । आद्यमनूद्य दूषयति-वस्तुन इति । द्वितीये वस्तुनोऽपरोक्षत्वे सिद्धे व्यवहारस्यापरोक्षत्वम् । व्यवहारापरोक्षत्वे च वस्त्वापरोक्ष्यमिति परस्पराश्रय इत्याह-अपरोक्षेति । नन्वपरोक्षोऽयमित्येवंरूपशब्दव्यवहारस्य स्वज्ञानजन्यस्य विषयापरोक्ष्यज्ञानं विनैव श्रोत्रग्राह्यत्वान्नोक्तदोष इत्याशङ्क्य दूषणान्तरमाह-अभाव इति । अनुपलब्धिरूपपरोक्षमानगम्यत्वान्न फलव्याप्यत्वमभावस्येत्याह- अस्ति चेति ।

विशेषणविशेष्ययोः परस्परव्याघातादप्यसम्भव इत्याह-यदि चेति ॥

परस्परव्याघातेनाऽसम्भवप्रतिपादनम् । यदि चाऽऽत्माऽवेद्यः न तर्ह्यपरोक्षव्यवहारविषयः स्यात् । फलव्याप्यस्यैवापरोक्षव्यवहारविषयत्वात् । यदि स्फुरणाविषयेऽपि स्फुरणे तद्विषयकापरोक्षवृत्तिस्तदविषयकस्फुरणमेव वा स्वभावविशेषाद्व्यवहारमुत्पादयेत्तर्ह्यवैरूप्याय घटादावपि तथैव स्यात् । अन्यथा प्रमेयत्वमपि स्ववृत्तिं विनैव स्वस्मिन्प्रमेयत्वव्यवहारं कुर्यादिति केवलान्वयि न स्यात् । किं च स्वप्रकाशत्वं न तावदात्मस्वरूपं साध्यम् । इष्टापत्तेः । न ह्यात्मनि कस्य चित्प्रद्वेषोऽस्ति । नापि तद्धर्मः । तस्यातात्त्विकत्वेनास्वयंप्रकाशतापत्त्या स्वप्रकाशत्वसाधकानुमानानां बाधितत्वात् । अप्रसिद्धविशेषणश्च पक्षः । न च वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् शौक्ल्यवदिति सामान्यतस्तत्सिद्धिरिति वाच्यम् । वेद्यत्वाभावमात्रसिद्धावपि विशिष्टसाध्यस्याप्रसिद्धत्वात् । मम मते घटादेः फलाव्याप्यत्वे तत्र साध्यसत्त्वाच्च धर्मत्वं च केवलान्वयि धर्मे व्यभिचारि । किं चात्यन्ताभावप्रतियोगित्वं यदि कुतश्चिन्न व्यावर्तेत । तर्हि तत्रैव व्यभिचारः ।

व्यावर्त्तते चेत् । यतो व्यावर्तते तत्रैव व्यभिचारः । अनुभूतित्वं च न जातिः । जातेर्धर्मिसत्तासमानसत्ताकभेदवद्व्यक्तिसापेक्षत्वात् । नोपाधिः । तदनिरूपणात् ।

फलाव्याप्यत्वलक्षणावेद्यत्वेऽप्यपरोक्षवृत्तिमहिम्नैवापरोक्षव्यवहारोऽस्तु । यदि सुखदुःखादावपरोक्षवृत्तेर्व्यभिचारान्न तद्धेतुत्वं तर्हि स्वरूपस्फुरणं स्वाविषयमेव स्वव्यवहारहेतुरित्यभ्युपगमे घटादावपि तथात्वापातेनातिव्याप्तिः स्यादित्यभिप्रेत्याह-यदीति । स्फुरणस्य स्वव्यतिरिक्ते तद्विषयतयैव व्यवहारहेतुत्वम् । स्वस्मिंस्तु स्वरूपेणैवेत्यभ्युपगमेऽतिप्रसङ्गमाह-अन्यथेति। एवं साध्यनिरुक्तं दूषयित्वा तत्स्वरूपमपि किं पक्षीभूतात्ममात्रं तद्धर्मो वेति विकल्पमभ्युपेत्य प्रथमं दूषयति । किं चेति। न द्वितीय इत्याह-नापीति । स किं तात्त्विको धर्मः, उतातात्त्विकः ? । नाद्यः द्वैतापत्तेः । न द्वितीयः । अधिष्ठानस्यारोपितविपरीतरूपत्वनियमेनास्वप्रकाशत्वापातादित्याह-तस्येति । अवेद्यत्वस्याप्रसिद्धत्वेन तद्घटितसाध्यस्याप्यसिद्धत्वात् । संदेहायोगान्न पक्षताऽपीत्याह-अप्रसिद्धेति । सामान्यतो दृष्टानुमानेन पक्षतदतिरिक्तौदासीन्येनावेद्यत्वसिद्धौ पक्षे संदेहनिवृत्तये केवलव्यतिरेकिप्रवृत्तिरित्याशङ्क्य तथापि विशिष्टसाध्यमप्रसिद्धमेवेति दूषयति-न चेति । असाधारण्यमप्याह-प्रमेति । सामान्यानुमानं च व्यभिचारीत्याह-धर्मत्वं चेति । केवलान्वयि धर्मे विप्रतिपन्नं प्रत्याह-किं चेति । अत्यन्ताभावप्रतियोगित्वं यदि सर्वत्र वर्तते

तर्हि तदेव केवलान्वयीति तत्र व्यभिचारः । यदि न वर्तते तदेवात्यन्ताभावाप्रतियोगितया केवलान्वयीति-तत्र व्यभिचार इत्यर्थः । हेतुकृतमनुभूतित्वमपि जातिरु-पाधिर्वा ?, नोभयथाऽपीत्याह-अनुभूतित्वं चेत्यादिना । धर्मिसत्तेति सिद्धान्तेऽनुभूतौ तादृशभेदाभावादिति भावः ॥

किं च घटादौ यादृशवेद्यत्वं स्वप्रकाशत्वविरोधि तादृशवेद्यत्वस्याऽऽत्मनि सत्त्वेऽपि तदत्यन्ताभावघटित-साध्यस्याप्युपपत्तेरस्वप्रकाशत्वेनार्थान्तरतेत्याह-अपि चेति ।

स्वप्रकाशत्वविरुद्धवेद्यत्ववत्तयाऽर्थान्तरत्वम् ।

अपि च घटादाविव स्वप्रका-शत्वविरोधिनो व्यावहारिकवेद्यत्वस्य सत्त्वेऽपि तदत्यन्ताभावसंभवेनार्थान्तरमिति । अत्र ब्रूमः । संविदविषयत्वं स्वप्रकाशत्वम् । न चाव्याप्त्य, तिव्याप्ती । चिद्रूपस्यात्मनः स्वाविषयत्वात्-स्वातिरिक्तसंविदन्तराभावाच्च । संविद्रूपात्मा-तिरिक्तस्य सर्वस्य संविद्विषयत्वात् । अतीता-देरतीन्द्रियस्यापि वृत्तिगतसंविदवच्छेदकतया तद्विषयत्वात् । अन्यथा जडवृत्तिमात्रादनात्म-व्यवहारायोगात् । न चैवमपि संविदगोचरस्त ज्जडमेवास्तीति वाच्यम् । स्वतः परतो वाऽसि-द्धस्य शङ्कितुमप्यशक्यत्वात् । संविच्च वृत्त्यति-रिक्ता निरूपितैवेति नासंभवोऽपि । अथवाऽवे-

द्यत्वे सत्यपरोक्षव्यवहारयोग्यताऽत्यन्ताभावानधिकरणत्वं स्वप्रकाशत्वमित्याचार्यीयमपि लक्षणमस्तु । तत्र च योग्यतान्तं लक्षणम् । अत्यन्ताभावानधिकरणत्वांशस्तु ब्रह्मणि लक्षणस्यासंभवं व्यावर्त्तयति ।

संविद्विषयत्वाभावः, संविद्विषयान्यत्वं वा संविदविषयत्वं स्वप्रकाशत्वं, तच्चाऽऽत्मस्वरूपमेवारोपिताभावस्याधिष्ठानमात्रत्वादित्यभिप्रेत्याह-अत्रेति अस्मिन् लक्षणे न पूर्वोक्तदोषावसर इत्याह-न चेति । आत्मधर्मज्ञानविषयत्वादव्याप्तिरित्यत आह संविदन्तरेति । अतिव्याप्त्यभावे हेतुमाह-संविद्रूपेति । अतीतादेः फलाव्याप्यत्वेऽपि संविद्विषयत्वान्न तत्रातिव्याप्तिरित्याह-अतीतादेरिति । अतीतादेर्वृत्तिविषयत्वमेव न चित्प्रकाशविषयत्वमित्यभ्युपगमे दोषमाह-अन्यथेति । हेतुगर्भविशेषणं दुःखादौ व्यभिचारादपि न वृत्तिमात्रस्य व्यवहारहेतुतेति द्रष्टव्यम् । जडस्यापि संविदविषयत्वसंभवात्तत्त्वेनार्थान्तरतेत्याशङ्क्याह-न चैवमिति । अयमभिसंधिः-संविदविषयत्वे सति प्रकाशमानत्वं स्वप्रकाशत्वम् । प्रकाशमानत्वं च स्वसत्तायां स्वसत्ताप्रकारकसंशयाद्यगोचरत्वम् तस्य घटादिवत्संविद्विषयत्वम् । अयुक्तत्वनिषेधे स्वरूपप्रयुक्तत्वमेवेति पर्यवस्यति । तथा च न जडत्वेनार्थान्तरतेति । ननु वृत्त्यतिरिक्ता संविदेव नास्ति वृत्तिविषयत्वञ्चात्मनोऽपीत्यसंभव इत्यत आह-संविच्चेति । चित्सुखाचार्यलक्षणमप्यनवद्यमित्याह-अथवेति । अत्रावेद्यत्वं फलाव्याप्यत्वम् । तच्च घटादावति-

व्याप्तिवारणाय । इतरच्च धर्मादौ । अत्र सर्वलक्षणमिति न भ्रमितव्यमित्याह-तत्र चेति । लक्षणस्यासम्भवमिति । लक्षणैकदेशयोग्यत्वासंभवमित्यर्थः । अत्यन्ताभावानधिकरणत्वस्य तत्प्रतियोग्यधिकरणत्वनियमादिति भावः । न च योग्यताया मिथ्यात्वात्तदत्यन्ताभावाधिकरणमेवाऽऽत्मेति वाच्यम् । प्रतियोगिसमानसत्ताकात्यन्ताभावस्य तत्सादेश्यविरोधादिति द्रष्टव्यम् ।

अत्रोक्ताव्याप्तिमपवदति-न चैवमिति ॥

अव्याप्तिनिरसनम् । न चैवं मुक्तिकालीन आत्मनि लक्षणाव्याप्तिः । नहीदं स्वप्रकाशस्य स्वरूपलक्षणं, किन्तु जगत्कारणत्ववत्तटस्थलक्षणम् । स्वरूपलक्षणं तु प्रागुक्तमेव । कदाचिद्वेद्यत्वविरुद्धधर्माधिकरणस्यैवात्मनो मुक्तावपि सत्त्वात् । एतेन "स्वप्रकाशत्वं वास्तवमवास्तवं वा?। आद्ये ऽद्वैतक्षतिः। द्वितीये ब्रह्मणो वस्तुतोऽस्वप्रकाशत्वप्रसङ्गः कल्पितविरुद्धस्वभावत्वादधिष्ठानस्य" इति निरस्तम् । एकस्य त्वदभिमतात्मविलक्षणस्वरूपत्वात्, अन्यस्य कल्पितत्वात् ।

किं च किमस्वप्रकाशत्वम् । स्वप्रकाशत्वधर्मराहित्यं, वेद्यत्वं वा ?। आद्य इष्टापत्तिः । ब्रह्मणो निर्धर्मकत्वात् । द्वितीयेऽपि वास्तवं न संभवति । ज्ञानात्मनो ब्रह्मणः स्वपरविषयत्वनिराकरणात् । अवास्तवं तु वेद्यत्वं स्वप्रकाशत्वस-

मानसत्ताकं तद्विरोधात्तत्र न संभवति । तदसमानसत्ताकमवास्तवं तु वेद्यत्वं काममिष्यतां, न नः क्षतिः । अत एव व्यावहारिकवेद्यत्वेऽपि पारमार्थिकवेद्यत्वेनार्थान्तरतेति निरस्तम् । व्यावहारिकवेद्यत्वस्य व्यावहारिकघटादिस्वप्रकाशत्वविरुद्धत्वेऽपि पारमार्थिकब्रह्मस्वप्रकाशत्वविरोधित्वं कथमिति च परिभावनीयम् ॥

स्वरूपलक्षणस्यैव कदाचिदभावो दोषः । न तटस्थलक्षणस्य । इदं च ब्रह्मणो जगत्कारणत्ववत्तटस्थलक्षणमेवेत्याह-न हीदमिति । तटस्थलक्षणस्य कदाचित्सत्त्वमात्रेण त्रिकालमितरेभ्यः स्वाश्रयव्यावर्त्तकत्वात्कदाचित्सत्त्वमेव प्रयोजकमित्यभिप्रेत्याह-कदाचिदिति । लक्षणद्वैविध्यकथनादेव तस्य वास्तवत्वादिविकल्पप्रयुक्तदोषो नेत्याह-एतेनेति । स्वरूपलक्षणस्य संविद्विषयात्ममात्रत्वान्नाद्वैतक्षतिः । न चेष्टापत्तिरित्यभिप्रेत्याह--एकस्येति । तटस्थलक्षणं तु मिथ्या, तदधिष्ठानं तु सत्यतया तद्विपरीतमेवेत्याह-अन्यस्येति ।

स्वप्रकाशत्वस्य मिथ्यात्वे यदापाद्यमानमस्वप्रकाशत्वं तन्निवर्त्तव्यमित्याह-किञ्चेति । अधिष्ठानस्य वस्तुत आरोप्यरहितत्वादाद्यमिष्टमेवेत्याह-आद्य इति । द्वितीये तद्वेद्यत्वं वास्तवमवास्तवं वा ? नाद्य इत्याह-द्वितीये इति । द्वितीये ऽपि किं तद्व्यावहारिकं प्रातीतिकं वा ? । नाद्यः । समानसत्ताकयोर्भावाभावयोर्विरोधादित्याह-अवास्तवमिति । द्वितीयमिष्टमेवेत्याह—तदसमानेति । यदुक्तं घटादौ व्यावहारिकवेद्यत्वस्यैव स्व-

प्रकाशत्वविरोधित्वात्तत्संभवेनाप्यर्थान्तरतेति, तत्राह-अत एवेति । समानसत्ताकयोर्भावाभावयोर्विरोधादेवेत्यर्थः । तदङ्गीकृत्यापि स्वरूपलक्षणलक्षितस्वप्रकाशत्वस्य न हानिरित्याह-व्यावहारिकेति । कथमिति । न कथमपीत्यर्थः ॥

यच्चोक्तं ब्रह्मणो वृत्तिवेद्यत्वान्नावेद्यत्वमिति तत्राह-नापीति ।

ब्रह्मणोवेद्यत्वप्रतिपादनम् । नापि ब्रह्मण्यवेद्यत्वस्यानिरूपणं फलाव्याप्यत्वस्यैव तस्य सर्वप्रमाणफलात्मनि तस्मिन्सत्त्वात्, फलस्य चाभिव्यक्तविषयावच्छिन्नचैतन्यात्मनस्तस्मिन्नभावात्, घटः स्फुरति पटः स्फुरतीतिफलस्य विषयावच्छेदव्यवहारात् । चैतन्यात्मनो ब्रह्मणः स्वस्वरूपचैतन्यानवच्छेदकत्वात् । चैतन्यान्तरस्य चाभावात् । घटादेश्च चैतन्यावच्छेदकत्वं निरूपितमिति न तदभावः । अन्तःकरणादि चाभिव्यक्तचैतन्यावच्छेदकम् । न चाविद्यानिवृत्तिरेव फलम् । तस्या एव ज्ञानजन्यत्वात् । तदाश्रयश्च ब्रह्मैवेति तदेव फलव्याप्यं न घटादिरितिवाच्यम् । अविद्यानिवृत्तेश्चैतन्यमात्रत्वेनाश्रयाश्रयिभावाभावात् । अस्तु वा तदपि न फलव्याप्यत्वं विवक्षितम्, किन्त्वभिव्यक्तचैतन्यावच्छेदकत्वमेव । न च ब्रह्मणः फलव्याप्यत्वाभावेऽपरोक्षत्वं न स्यादिति वाच्यम् ।

प्रमात्रव्यवधानेन प्रकाशमानत्वमात्रेणापरोक्ष-त्वोपपत्तेः ।

प्रमाणफलात्मनीति । तदुक्तमत्र भवद्भिः सुरेश्वराचार्यैः—

"परागर्थप्रमेयेषु या फलत्वेन संमता ।
संवित् सैवेह मे येऽर्थो वेदान्तोक्तिप्रमाणतः" इति ।

फलस्वरूपं प्रदर्शयंस्तदव्याप्यत्वमाह-फलस्य चेति । प्रमातृधर्मवृत्त्यतिरिक्तफलमेव नास्तीत्याशङ्क्याह-घट इति । आत्मा फलव्याप्यः अपरोक्षत्वात् संमतवदित्याशङ्क्य किं स्वरूपचैतन्यव्याप्यत्वं साध्यते उत स्वातिरिक्तचैतन्यव्याप्यत्वम् ? । नाद्यः । भिन्नयोरेवावच्छेद्यावच्छेदकभावादित्यभिप्रेत्याह-चैतन्येति । द्वितीयं दूषयति-चैतन्यान्तरस्येति । घटादेरपि वृत्तिविषयत्वव्यतिरेकेण न फलव्याप्यत्वम् । तथा च तत्रातिव्याप्तिरित्याशङ्क्याह-घटादेरिति । अनावृतप्रमातृचैतन्यतादात्म्यं विना तदापरोक्ष्यानुपपत्तिरित्यादिकं निरूपितमित्यर्थः । अज्ञानान्तःकरणतद्धर्मेष्वतिव्याप्तिमाशङ्क्याह-अन्तःकरणेति । ननु क्रियासाध्यस्यैव फलत्वात्, ज्ञानक्रियासाध्याविद्यानिवृत्तिरेव फलम् । तथा च ब्रह्मैव फलव्याप्यमिति न वाच्यमित्याह-न चेति । हेतुमाह-अविद्येति । आरोपिताभावस्याधिष्ठानमात्रत्वप्रसाधनादिति भावः । अविद्यानिवृत्तिरधिष्ठानाद्भिन्नेतिमतेनाह-अस्तु चेति । अभिव्यक्तचैतन्यावच्छेदकत्वलक्षणफलव्याप्यत्वस्यैव घटादावपरोक्षत्वप्रयोजकत्वाद् ब्रह्मण आपरोक्ष्यं तदभावे न स्यादित्याशङ्क्य हेत्वसिद्ध्या दूषयति-न चेति । अनावृतचैतन्याव्यवधानमेवा-

परोक्षत्वप्रयोजकम् । तच्च घटादौ तेनाध्यासिकतादात्म्यप्रयुक्तम् । ब्रह्मणस्तु स्वत एवेति भावः ।

सामान्यादिप्रत्यासत्तिमङ्गीकृत्य लक्षणगतापरोक्षव्यवहारं निर्वक्ति-व्यवहारस्येति ।

व्यवहारस्यापरोक्षत्वमनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यसहकृतप्रमाणजन्यप्रत्यक्षजन्यत्वं घटादिव्यवहारस्यैवंरूपत्वात्, 'अहं ब्रह्मास्मि' इतिव्यवहारस्यापि वाक्यजन्यप्रत्यक्षज्ञानजन्यत्वात्, उक्तप्रत्यासत्तिजज्ञानाजन्यज्ञानाकरणकवृत्तिजन्यत्वं वा व्यवहारापरोक्षत्वम् । अहमिति व्यवहारश्चैवंरूपः । धर्मादिव्यवहारश्च नैवम् । न चैवमात्मनो ज्ञानविषयत्वापत्तिः । वृत्तिविषयत्वस्येष्टत्वात् । पूर्णात्मनः स्वातिरिक्तचैतन्याभावेन तद्विषयत्वस्यैवास्माभिरनङ्गीकारात् । व्यवहारमात्रे प्रकाशमात्रं कारणं, न तु तद्विषयप्रकाशत्वेन, गौरवात् । आत्मव्यवहारे आत्माभिन्नप्रकाशस्याऽनात्मत्वव्यवहारे च तद्विषयप्रकाशत्वेन कारणत्वम् । न च घटादेरपि प्रकाशविषयत्वं मास्त्विति वाच्यम् । प्रकाशमात्रस्य तद्व्यवहारकारणत्वेऽतिप्रसङ्गात् ॥

अत्रानागतगोचरसाक्षात्कारजनकप्रत्यासत्तिपदेन सामान्यादिप्रत्यासत्तिर्विवक्षिता । तथा च वर्तमानत्वप्रत्यासत्त्या इदं वर्तमानमितिज्ञानविषयधर्मादिव्यव-

हारे नातिव्याप्तिः । वस्तुतस्तु सामान्यादिप्रत्यासत्ते-र्निरसिष्यमाणत्वादपरोक्षज्ञानजन्यत्वं व्यवहारापरोक्षत्वं, अपरोक्षार्थविषयत्वं वा । अर्थापरोक्षं तु संविद्भेदादिति नान्योन्याश्रयादिरिति भावः ।

नन्वात्मव्यवहारस्य नित्यसाक्षिजन्यतया जन्यप्रत्यक्षजन्यत्वाभावादसंभव इति तत्राह-अहं ब्रह्मास्मीति । नित्यसाक्षिजन्यात्मव्यवहारसंग्रहाय लक्षणान्तरमाह-उक्तेति । अनुमित्यादिजन्यव्यवहारवारणाय ज्ञानाकरणकेत्यादि । अत्राव्याप्त्यतिव्याप्तिशङ्कैव नेत्याह-अहमितीति । आद्यलक्षणे प्रत्यक्षज्ञानविषयत्वादात्मनो दृश्यत्वापत्तिरित्याशङ्क्य न वृत्तिविषयत्वं दृश्यत्वं, किं तु चिद्विषयत्वमेव । तच्च न चिद्रूपात्मन इत्याह-न चैवमिति ।

नन्वात्मनश्चित्प्रकाशविषयत्वमपि वाच्यम् । इतरथा तद्व्यवहारायोगादित्याशङ्क्य पूर्वोक्तन्यायं स्मारयति-व्यवहारेति । तथाप्यात्मव्यवहाररूपकार्यविशेषे तद्विषयप्रकाशरूपकारणविशेषो वाच्य इत्याशङ्क्याह-आत्मव्यवहार इति। आत्मनः प्रकाशविषयत्वासंभवाद् "विज्ञातारमरे केन" इत्यादिश्रुतिप्रसिद्धत्वाच्च प्रकाशाभेद एवात्र विशेषकारणम् । स च यावद्व्यवहारं भेदाभावात्मा कल्पित आत्मातिरिक्तोऽस्तीति भावः । यद्वा यथा ज्ञानसामान्यसामग्रीत एवासति संस्कारेऽनुभवरूपविशेषकार्यम् । यथा वा तत एवासति दोषे स्वतस्त्वमते प्रमारूपकार्यविशेषः एवं प्रकाशमात्रादेवासति संस्कारे सति भेदे व्यवहारविशेष इत्यर्थः। तर्हि

घटादावपि सामान्यकारणादेव व्यवहारविशेष्यमित्याशङ्कामतिप्रसङ्गेन दूषयति-न चेति ।

घटादावपि प्रकाशभेद एव विशेषकारणमिति मन्वानं सुगतं प्रत्याह-घटस्येति ।

घटस्य प्रकाश इत्यनुभवस्यासति बाधके प्रामाण्यत्यागायोगाच्च । न च साध्याप्रसिद्धिः । प्रथमसाध्याभावस्य भावरूपस्य चैतन्यविषयत्वस्य घटादौ प्रसिद्धत्वात् । अत्र गृहीतव्यतिरेकव्याप्तिकस्य पुंसो विनाऽपि साध्यप्रसिद्धिं पक्षे तदनुमानसंभवात् । द्वितीयसाध्ये चापरोक्षव्यवहारविषयसंविद् वेद्या न भवतीति साध्यम् । वेद्यत्वं च संविद्विषयत्वमिति । तदभावसिद्धावर्थात्फलव्याप्यत्वाभावः पक्षे सिद्ध्यति ।

अथ वा वेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वादेर्घटादौ प्रसिद्धस्यानुभूतापरोक्षव्यवहारविषयेऽनुभूतित्वेन हेतुनाऽभावानुमानात् । अर्थादवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वस्यापि पक्ष एव सिद्धेः। न चादृष्टादावसाधारण्यम् । तस्य तर्कानवतारदशायामेव दोषत्वात् । आचार्यानुमाने तु वेद्यत्वमपरोक्षव्यवहारयोग्यं किं चिन्निष्ठात्यन्ताभावप्रतियोगिभावधर्मत्वादिति विवक्षितम् ।

चिज्जडयोर्वास्तवाभेदायोगाद्भेदानुभवविरोधाच्चेत्यर्थः । यच्चोक्तमप्रसिद्धविशेषणः पक्ष इति तद् दूषयति

न चेति । साध्याप्रसिद्धिरिति । दोषायेति शेषः । अभावप्रसिद्धौ प्रतियोगिप्रसिद्धेस्तन्मात्वात्संविद्विषयत्वरूपप्रतियोगिनो घटादावनुभूतित्वाभावेन व्याप्ततया गृहीतत्वादनुभूतित्वहेतोर्व्यतिरेकव्याप्तिपक्षधर्मतयोः-सत्त्वादाद्यलक्षणलक्षितसाध्ये साम्राज्यमित्यभिप्रेत्याह प्रथमेति । द्वितीयलक्षणे विशेष्यस्यात्मनि सिद्धस्य पक्षकोटौ निवेशसंभवाद्विशेषणमात्रस्यावेद्यत्वस्य व्यतिरेकव्याप्तिमद्धेतुबलात्सिद्धावर्थाद्विशिष्टलक्षणसिद्धिरित्यभिप्रेत्याह-द्वितीयेति । अर्थादिति । फलविषयत्वे संविद्विषयत्वायोगादित्यर्थः । फलाव्याप्यत्वस्य मुखतः साध्यत्वेऽपि न दोषः । इदानीमत्रापि विशिष्टाभावस्यैव साध्यत्वात्, विशिष्टस्य च घटादौ हेत्वभावेन व्याप्तत्वात्, प्रथमलक्षणवन्न साध्याप्रसिद्धिर्दोषायेत्याह-अथ वेति । विशेष्यवति विशिष्टाभावो विशेषणभूतवेद्यत्वाभावपर्यायैव पर्यवस्यति । तथा चावेद्यत्वविशिष्टलक्षणसिद्धिरित्याह-अर्थादिति । ननु विशेष्याभावो विशेषणविशिष्टाभाववत्यद्रष्टादौ सपक्षे हेतोरभावादसाधारण्यमित्याशङ्क्य तस्यानित्यदोषत्वान्नैतद् दूषकत्वमित्याह-न चादृष्टेति । यदप्युक्तं वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिधर्मत्वादिति सामान्यतो दृष्टानुमानान्न विशिष्टसाध्यसिद्धिरिति । तत्राह-आचार्येति । परोक्षव्यवहारविषयत्वात्यन्ताभावे व्यभिचारवारणाय भावेत्युक्तम् । न चापरोक्षव्यवहारविषयत्वे व्यभिचारः । परमते तस्मिन्नेव तदत्यन्ताभावसत्त्वात् । अस्मन्मते तस्य मिथ्यात्वेन पक्षसमत्वान्न व्यभिचार इति भावः ।

प्रमेयत्वादावुक्तव्यभिचारमनूद्य दूषयति-यत्त्वित्यादिना ।

यत्तु केवलान्वयिधर्मे व्यभिचार इति । तदसत् । केवलान्वयिधर्मासिद्धेः प्रमेयत्वादेरपि स्वस्मिन् सम्बन्धाभावेन स्ववृत्त्यत्यन्ताभाववत्त्वात् । न 'चैवं प्रमेयत्वं प्रमेयम्'इति धीर्न स्यादिति वाच्यम् । तस्यास्तद्वृत्तिप्रमेयत्वान्तरविषयत्वात् ।

अथवा भेदो भिन्नः घटाभावे घटो नास्तीत्यादिबुद्धिवत् । प्रमेयत्वस्वरूपमेव तद्बुद्धिविषयः । एवमत्यन्ताभावप्रतियोगित्वेऽपि द्रष्टव्यम् । न च प्रमाविषयत्वाख्यप्रमेयत्वं केवलान्वयिप्रमा तद्विषयातिरिक्तस्य प्रमाविषयत्वस्यैवाभावात् । तयोश्चाकेवलान्वयित्वात् । अतिरिक्तविषयतायाश्च तैरेव निराकरणात् ।

यच्च प्रमात्वमेव प्रमेयत्वम् । परम्परासम्बन्धेन तस्य घटादावपि सत्त्वादिति । तन्न । वृत्तिमदत्यन्ताभावप्रतियोगित्वेनाकेवलान्वयित्वात् ॥

प्रमेयत्वात्यन्ताभावस्य कुत्राप्यभावाद्वृत्तिमदत्यन्ता-भावाप्रतियोगित्वेन तस्यकेवलान्वयित्वमित्याशङ्क्याह-प्रमेयत्वादेरिति । संबन्धाभावेनेति । स्ववृत्तित्वायोगादितिशेषः । प्रमेयत्वस्य स्वस्मिन्नभावे प्रमेयत्वस्य नानात्वादेकस्यापरवैशिष्ट्यमुपपद्यत इति भावः ।

प्रमेयत्वस्यैकत्वेऽपि तत्स्वरूपमेव विशिष्टप्रत्ययविषय इति सदृष्टान्तमाह—अथ वेति । यथा घटभेदो घटभिन्न इति विशिष्टप्रत्ययविषयो घटभेदस्वरूपमेव, भेदे भेदान्तराङ्गीकारेऽनवस्थापत्तेः । यथा वा घटाभावे घटो नास्तीति प्रतीतेस्तत्स्वरूपमेव विषयः । घटाभावे तदभावान्तरस्याभावादेवमत्रापीत्यर्थः । मदुक्तमत्यन्ताभावप्रतियोगित्वाच्चेत्यर्थः । प्रमेयत्वस्यापि नानात्वे नाकेवलान्वयित्वमित्याह-न चेति । अत्र केन चित्तार्किकापशदेनोत्प्रेक्षितं प्रमात्वमेव प्रमेयत्वम् । तच्च केवलान्वयीति तदनुवदति-यच्चेति । परम्परासम्बन्धेनेति । प्रमात्वाश्रयप्रमाविषयत्वसम्बन्धेनेत्यर्थः । किं प्रमात्वं साक्षादेव केवलान्वयि उत परम्परासम्बन्धेन किं वा तदुभयसाधारण्येन ? । नाद्यः । घटादौ साक्षात्तदभावात् । न द्वितीयः । प्रमायां परम्पराया अभावात् । न तृतीयः । स्वस्मिन्नेवोभयथाऽप्यभावात् । घटत्वादेरपि साक्षात्परम्परासम्बन्धेन केवलान्वयित्वापातात् । तद्वृत्तितत्प्रकारकज्ञानत्वादिरूपस्य तत्तद्वैशिष्ट्यप्रतिभासाद्यनेकात्मकस्य प्रतिप्रमायां भिन्नत्वेनैकत्वायोगाच्चेत्यभिप्रेत्याह तन्नेति ॥

दूषणान्तरमाह-किं चेति ।

किं च प्रमात्वमेव यदि प्रमेयत्वं तर्हि सर्वमुक्तौ न प्रमेयत्वम् । प्रमाव्यक्तिघटितप्रमात्वस्य तदभावेऽभावात् । ईश्वरज्ञाने तदाऽपि प्रमात्वमस्तीति चेत् तस्याप्रमात्वात् ।

किं च यदि प्रमात्वं घटेऽपि स्यात् तर्हि

प्रमायास्तत इतरभेदानुमानं न स्यात् । विपक्षेऽपि तद्वृत्तेः । न च प्रमात्वसमवायित्वमितरभेदानुमितौ लिङ्गम् । असिद्धेः । स्वरूपसंबन्धस्तु घटेऽपि तुल्यः । लाघवेन प्रमात्वाभावस्यैव तदितरभेदाभावव्यापकत्वाच्च । यत्र यत्संबन्धेन यदत्यन्ताभावस्तत्रैव तद्वृत्तौ विरोधो दत्तजलाञ्जलिः स्यात् । एतेन शब्दप्रतिपाद्यत्वादेरपि केवलान्वयित्वं निरस्तम् । शब्दजन्यज्ञानविषयत्वादेस्तस्य व्यावृत्तत्वात् । प्रमेयत्वादेरात्मन्यभावाच्च न केवलान्वयित्वम् । अनुभूतित्वं च जातिः । कल्पितभेदवत्संविन्निष्ठत्वात् । जातौ च स्वसमानसत्ताको व्यक्तिभेदोऽपेक्ष्यते न तु धर्मिसमानसत्ताकः । अनुभूतिश्च वृत्त्युपहितचैतन्यमिति न वृत्तिभागे व्यभिचारः ॥

व्यक्तिघटितेति । तस्य यथार्थज्ञानत्वादिरूपोपाधित्वादित्यर्थः । मुक्तावनित्यज्ञानाभावेऽपि नित्यप्रमात्वमस्तीति शङ्कते-ईश्वरेति । ईश्वरज्ञानस्य गुणदोषाजन्यत्वात् प्रमाऽप्रमाबहिर्भूतत्वमेवेत्यभिप्रेत्याह-न तस्येति ।

प्रमात्वस्य घटादिवृत्तौ ततः प्रमाव्यावर्तकत्वं न स्यादित्याह-किं चेति । तत इति । प्रमात्वहेतोरित्यर्थः । प्रमात्वस्य घटादौ परम्परासंबन्ध एव, न तु समवायः । तद्वत्त्वमेवेतरभेदानुमाने लिङ्गमिति

चेन्न । प्रमात्वस्योपाधित्वेन प्रमायामपि तत्समवाया-सिद्धेरित्याह-न च प्रमात्वेति । अस्तु तर्हि तत्स्वरूप-संबन्ध एव लिङ्गमित्यत आह-स्वरूपेति । किं च यत्र प्रमेतरभेदाभावस्तत्र प्रमात्वाभाव इत्येव लाघवाद् व्यतिरेकव्याप्तिर्वाच्या । तथा च प्रमात्वस्य घटादिवृत्तावियं व्याप्तिर्न संभवेदित्याह-लाघवेनेति । घटादौ प्रमात्ववत्तदत्यन्ताभावोऽप्यस्त्येव । तथा च नोक्तव्याप्त्यसंभव इत्याशङ्क्याह-यत्रेति । उक्तन्यायेनाभिधेयत्वादिकमपि न केवलान्वयीत्याह-एतेनेति । अभिधेयत्वादेः सखण्डत्वेन प्रतिपदार्थभिन्नत्वान्न सर्वत्रानुगम इत्याह-शब्देति । स्वमतेनाह-प्रमेयत्वादेरिति । यदुक्तम् अनुभूतित्वं जातिरुपाधिर्वा न संभवतीति । तत्राह-अनुभूतित्वं चेति । यच्चोक्तं जातेर्धर्मिसमसत्ताकव्यक्तिभेदनियतत्वादिति । तत्र धर्मिग्रहापेक्षया धर्मत्वस्य ग्रहे लाघवम् । अनुभूतौ चानिर्वचनीयजातिसमसत्ताकभेदस्त्विष्ट एवेत्यभिप्रेत्याह-जातौ चेति । अनुभूतित्वस्य जडवृत्तावपि सत्त्वेन व्यभिचारमाशङ्क्याह-अनुभूतिश्चेति । श्रोत्रोपाधौ कर्णे श्रोत्रव्यवहारवदनुभूत्युपाधिवृत्तावनुभूतिव्यवहार इति भावः ।

आत्मनः स्वप्रकाशत्वसाधकप्रमाणविषयत्वेऽविषयत्वे वा न स्वप्रकाशत्वमित्यादिप्राकृतचोद्यस्य नात्रावसर इत्याह-एतेनेति ।

एतेन 'यदि स्वप्रकाशत्वसाधकानुमानमनुभूतिं विषयीकरोति, तर्हि तस्याः वेद्यत्वम् । अथ न विषयीकरोति । तर्ह्यसत्त्वं स्वप्रकाश-

त्वस्य । न च स्वप्रकाशत्वधर्मोऽपि स्वप्रकाशः । अथ स्वप्रकाशत्वस्यानुमितिवेद्यत्वेऽपि नानुभूतेस्तद्वेद्यत्वम् । धर्मिणं विनाऽपि शब्दादेर्ग्रहणादिति चेत्ः न । अनुमानस्य पक्षविशिष्टसाध्यविषयत्वात्, इति निरस्तम् । अनुभूतेरनुमितिरूपवृत्तिवेद्यत्वेऽपि चैतन्यवेद्यत्वफलव्याप्यत्वयोरभावात् ।

अथ ज्ञानं वेद्यं वस्तुत्वाद्, व्यवहारविषयत्वाद्वा घटवत् । विपर्यये च नरशृङ्गादिवदवस्तुत्वप्रसङ्ग इति चेन्न । प्रकाशमानत्वमात्रेणैव तन्निवृत्तेरप्रयोजकत्वात् । अनुभूतेः स्वपरवेद्यत्वायोगस्योक्तत्वाच्च ।

किं च स्वात्मन्यस्तित्वादिविषयः संशयो विपर्यासो वा नेति सर्वं संप्रतिपन्नम् । स च नियमेन तत्कारणाभावप्रयोज्यः । तत्कारणं चात्र विशेषादर्शनमेव नास्तीति वाच्यम् । तदन्यस्य धर्मीन्द्रियसन्निकर्षकोटिस्मरणादेः सर्वस्य सत्त्वात् ।

अस्य निरस्तमित्युत्तरेण संबन्धः । तर्ह्यसत्त्वमिति । मानाभावे मेयासत्त्वादित्यर्थः । मानासिद्धत्वेऽपि स्वतःसिद्धत्वात् सत्त्वमित्याशङ्क्याह-न चेति । धर्मस्य मिथ्यात्वेन जडत्वादिति भावः । स्वप्रकाशत्वधर्मस्यानुमितिवेद्यत्वेऽपि न धर्मिणः स्वप्रकाशत्व-

क्षतिरिति शङ्कते-अथेति । धर्मिग्रहणं विना कथं धर्ममात्रग्रहणमित्याशङ्क्याह-धर्मिणमिति । धर्मिणः प्रत्यक्षाविषयत्वेऽप्यनुमितिविषयत्वमावश्यकमित्याह पूर्ववादी-न अनुमानस्येति । अनुभूतेरनुमितिविषयत्वेऽपि नोक्तलक्षणद्वयविरोध इत्याह-अनुभूतेरिति ।

स्वप्रकाशानुमानस्य प्रतिप्रयोगमाशङ्कते-अथेति । स्वसंज्ञाप्रकारकसंशयाद्यगोचरत्वेनैवावस्तुत्वनिवृत्तेर्वेद्यत्वं विना न वस्तुत्वाद्यनुपपत्तिरिति दूषयति-न प्रकाशे । प्रतिकूलतर्कपराहतं चेदमनुमानमित्यभिप्रेत्याह-अनुभूतेरिति ।

आत्मनः कदाप्यस्तित्वादिप्रकारकसंशयाद्यभावानुपपत्तिरूपार्थापत्तिरपि स्वप्रकाशत्वे मानमित्यभिप्रेत्याह-किं चेति । यावत्कालं संशयाद्यभावस्तावत्कालं तत्कारणाभावो वक्तव्य इत्याह-स चेति । अत्र संशयादिकारणस्य विशेषादर्शनस्यैवाभावो विशेषदर्शनं वाच्यम् । अन्यस्य कारणस्य कदाचिद्भावात् । तच्च विशेषदर्शनमागन्तुकं सर्वदा न संभवतीति स्वप्रकाशत्वसिद्धिरित्यभिप्रेत्याह-तत्कारणमिति ॥

ननु वर्त्तमानकालीनात्मन्यहंप्रत्ययेन निश्चितत्वान्न संशयः । अतीतकालीनात्मनि धर्मिज्ञानाभावादेव न संशय इति शङ्कते नन्विति ।

ननु धर्मिज्ञानविरहात् संशयविरह इति चेन्न। एतत्कालावच्छिन्ने आत्मनि ज्ञायमाने ऽप्यहं प्रातःकालीनो न वेति संशयादर्शनात् ।

तत्कालस्य च घटज्ञानधाराधारत्वेन तदानीमात्मज्ञानाभावात् । अहमिति ज्ञानानन्तरमहं ज्ञानवान्न वेति संशयप्रसङ्गाच्च । आत्मस्वरूपज्ञानस्यास्वप्रकाशत्वे स्वयंदृष्टगजादेरपरोक्षत्वाभावापत्तेश्च । एतेन संशयाभावो न स्वप्रकाशत्वनियतः शरीरादिषु तदभावादिति निरस्तम् । शरीरस्यापि स्वप्रकाशात्माभेदाध्यासेन स्वसत्तायां प्रकाशाव्यभिचारात् । तस्मान्न वेद्यत्वानुमानं साधु । अतस्सिद्धं स्वप्रकाश आत्मेति । एतेन साक्षी चेता केवलो निर्गुण इत्यादिश्रुतिसिद्धं साक्षित्वं व्याख्यातम् ।

अकर्तृत्वे सति द्रष्टृत्वं हि साक्षित्वम् । लोके तथैव प्रसिद्धेः । अहमर्थप्रकाशश्चित्स्वरूपात्माऽप्यकर्त्तृत्युक्तमित्यौदासीन्यबोधाभ्यामात्मा साक्षी भवति । न च द्रष्टृत्वं दर्शनक्रियाकर्तृत्वमतो व्याघात इति वाच्यम् । दर्शनस्य नित्यत्वेनात्मनस्तदकर्तृत्वात् । स्वरूपचैतन्यस्यैव तत्तद्विषयावच्छिन्नं तत्तद्वृत्त्यवच्छिन्नं वा प्रतिसंबन्धित्वमिति द्रष्टव्यम् ।

वर्त्तमानतया निश्चितेऽपि घटे प्रातःकालीनत्वादिसंशयवदात्मन्यस्वप्रकाशे कालान्तरीयत्वसंशयः स्यादेवेत्याह-न एतत्कालेति । प्रातःकालेऽप्यात्मनोऽहं-

प्रत्ययेन निश्चितत्वान्न संशय इत्यत आह-तत्कालस्य चेति । सर्वदाऽहंप्रत्ययधारायां बाह्यज्ञानविलोपप्रसङ्गादिति चशब्दार्थः । ज्ञानस्यास्वप्रकाशत्वे तदुत्पत्त्यनन्तरं तत्र कदाचित्संशयः स्यात् । धर्मिज्ञानादेः सत्त्वादित्यभिप्रेत्याह-अहमिति । अर्थापत्त्यन्तरमाह-आत्मेति । एतच्च स्वप्नसाक्षिवादे निरूपितमिति भावः । शरीराहङ्कारदुःखादीनां यथा जडत्वेऽपि संशयाद्यभावस्तथाऽऽत्मनोऽपि किं न स्यादित्याशङ्क्याह-एतेनेति । न हि वयं स्वप्रकाशत्वं संशयाद्यभावे प्रयोजकं ब्रूमः । किं तु प्रकाशमानत्वम् । तच्च परिशेषादात्मनः स्वप्रकाशत्वेन शरीरादेस्तत्तादात्म्याध्यासेनेत्यभिप्रेत्याह-शरीरस्येति अनेकप्रमाणविरोधादप्रयोजकत्वाच्च प्रतिपक्षानुमानं दुर्बलमित्याह-तस्मादिति । फलितमाह-अत इति । इयता प्रबन्धेनोपपादितमात्मतत्त्वमेव त्वंपदार्थशोधकवाक्यप्रमेयमित्यभिप्रेत्याह-एतेनेति ।

आत्मनः साक्षित्वं दर्शयितुं तत्स्वरूपमाह-अकर्तृत्वे इति । लोक इति । विवादादिकं यस्तु न करोति अथ च जानाति तस्मिन्नेव साक्षित्वप्रसिद्धेरित्यर्थः । आत्मनः कर्तृत्वान्न साक्षित्वमित्याशङ्क्याह-अहमर्थेति । औदासीन्यबोधाभ्यामिति-इत्थंभावे तृतीया । नन्वकर्तृत्वद्रष्टृत्वयोः परस्परव्याघातादसंभव इति चेन्न । न हि द्रष्टृत्वन्दर्शनकर्तृत्वं किं तु पराभिमतेश्वरवद्दर्शनं प्रति संबन्धित्वमित्यभिप्रेत्याह-न चेति । आत्मनो दर्शनसंबन्धित्वं वा कथंभेदाभावादित्याशङ्क्य कल्पितभेदेनेत्याह-स्वरूपेति ।

इदं च साक्षित्वमविद्यादशायामेव दृश्यापेक्ष-त्वात्। सदातनं तु निर्विकारबोधात्मकमेवेत्याह-अत एवेति।

अत एव द्रष्टृत्वघटितं साक्षित्वं न स्वरूपम्। अपि तूदासीनबोधात्मकमेव साक्षित्वं स्वरूपम्। तस्य निष्प्रतियोगिकस्वरूपत्वात्। अयमेवात्मा "एष ते आत्मा सर्वान्तरः" इति श्रुत्याऽप्युच्यते। अहमनुभवे प्रकाशमानस्यैव चैतन्यात्मनोऽन्तःक-रणादेरधिष्ठानतया सर्वान्तरत्वात्। चैतन्याति-रिक्तस्य सर्वस्य कल्पिततया बाह्यत्वात्। तथा च श्रुतिः "अतोऽन्यदार्तमिति पराञ्चि खानि व्यतृ-णत्स्वयंभूः। तस्मात्पराङ् पश्यति नान्तरात्मन् कश्चिद्धीरः प्रत्यगात्मानम्" इत्यादिश्रुत्याप्ययय-मेव प्रत्यगात्मेत्युच्यते। अस्यैव सदानन्दकूटस्थ-चिदात्मनोऽनृतदुःखजडपरिणाम्यहङ्कारादिप्राति-कूल्येन प्रकाशनात्। तस्मादहमनुभवगोचरदुःखा-द्याश्रयातिरिक्तः सत्यज्ञानानन्दात्मकोऽकर्तृप्रका-शरूपेण साक्षी सर्वान्तरः प्रत्यगात्मा जीवस्य वा-स्तवं रूपं त्वंपदलक्ष्यमिति सिद्धम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीज-गन्नाथाश्रमभगवच्छिष्यश्रीनृसिंहाश्रमकृताद्वैतदी-पिकायां साक्षिविवेको नाम प्रथमः परिच्छेदः।

सर्वान्तरत्वश्रुतिरप्यत्रैवोपपद्यते, न पराभिमतात्मनीत्यभिप्रेत्याह-अयमेवेति। आत्माऽन्यस्य कल्पितत्वे तद्वाक्यं शेषं प्रमाणयति-तथा चेति। आर्तम्-अनृतमित्यर्थः। स्वयंभूः-ब्रह्मा। खानि-इन्द्रियाणि पराञ्चि बाह्यविषयप्रवणानि कृत्वा व्यतृणत्-हिंसितवान्। तस्मात्-हेतोः सर्वो लोकः पराङेव बहिरेव पश्यति न त्वन्तरात्मानम्। तर्हि मोक्षशास्त्रमनर्थकं स्यादित्याशङ्क्याह-कश्चिद्धीर इति। अत एव पराङ्विषयेभ्यः प्रत्याहृतेन्द्रियो मुमुक्षुः श्रुत्याचार्येश्वरप्रसादात्प्रत्यगात्मानं पश्यतीतिश्रुत्यर्थः। प्रतिजडं प्रातिलोम्येन अञ्चति प्रकाशत इति प्रत्यक्शब्दार्थः। स चात्मा निरूपितस्वरूपमेवेत्याह-अस्यैवेति। त्वंपदार्थशोधनमुपसंहरति-तस्मादिति।

इतिश्रीमत्परमहंसपरिव्राजकाचार्यभगवन्नृसिंहाश्रमपूज्यपादशिष्यनारायणाश्रमविरचितेऽद्वैतदीपिकाविवरणे प्रथमः परिच्छेदः।

श्रीरामचन्द्राय परब्रह्मणेऽर्पणमस्तु।



॥ श्रीगणेशाय नमः ॥

सार्थानि वेदान्तवचांसि येन, यो
हिरण्यविद्विट् च सुदर्शनाश्रयः ॥
प्रल्हाद उत्सर्पति यस्य चिन्तया
स मे नृसिंहो यतिराट् सदा गतिः ॥ १ ॥

अतीतपरिच्छेदे लाघवाद्युपोद्बलितानुमानादिना- ऽहमर्थातिरिक्त एकः कूटस्थो निर्विशेषश्चिद्रूपः सिद्ध आत्मेत्युक्तम् । तदयुक्तम् । जीवेश्वरयोः जीवानां च परस्परभेदग्राहकप्रत्यक्षादिप्रमाणाविरोधेन लाघवानव- तारादित्याद्याक्षेपनिरासाय भेदमिथ्यात्वं निरूपयितुं परिच्छेदान्तरमारभमाणस्तदर्थं प्रदर्शयन् श्रीनृसिंहं प्रार्थ- यते-नरहरीति ।

नरहरिवपुषा यो दारयन् दानवोरः
प्रकटयति पुमर्थोऽभेददृष्टावितीशः ॥
निजगुणमयमायामात्रमात्रादिभेदो
गुरुतरदयया मां पातु लक्ष्मीसहायः ॥ १ ॥
जगन्नाथाश्रममुनेश्चित्रं चरणरेणवः ।
वाचामगोचरेऽप्यर्थे मूकं वाचालयन्ति माम् २ ॥

अथास्य परस्माद्विभागः परीक्ष्यते । तत्र जीवपरयोः स्वाभाविको भेदः पारमार्थिक इति केचित् । औपाधिकः पारमार्थिक इत्यन्ये ।

सर्वान्तरत्वश्रुतिरप्यत्रैवोपपद्यते, न पराभिमतात्मनीत्यभिप्रेत्याह-अयमेवेति। आत्माऽन्यस्य कल्पितत्वे तद्वाक्यं शेषं प्रमाणयति-तथा चेति। आर्तम्-अनृतमित्यर्थः। स्वयंभूः-ब्रह्मा। खानि-इन्द्रियाणि पराञ्चि बाह्यविषयप्रवणानि कृत्वा व्यतृणत्-हिंसितवान्। तस्मात्-हेतोः सर्वो लोकः पराङेव बहिरेव पश्यति न त्वन्तरात्मानम्। तर्हि मोक्षशास्त्रमनर्थकं स्यादित्याशङ्क्याह-कश्चिद्धीर इति। अत एव पराङ्विषयेभ्यः प्रत्याहृतेन्द्रियो मुमुक्षुः श्रुत्याचार्येश्वरप्रसादात्प्रत्यगात्मानं पश्यतीति श्रुत्यर्थः। प्रतिजडं प्रातिलोम्येन अञ्चति प्रकाशत इति प्रत्यक्शब्दार्थः। स चात्मा निरूपितस्वरूपमेवेत्याह-अस्यैवेति। त्वंपदार्थशोधनमुपसंहरति-तस्मादिति।

इतिश्रीमत्परमहंसपरिव्राजकाचार्यभगवन्नृसिंहाश्रमपूज्यपादशिष्यनारायणाश्रमविरचितेऽद्वैतदीपिकाविवरणे प्रथमः परिच्छेदः।

श्रीरामचन्द्राय परब्रह्मणेऽर्पणमस्तु।



॥ श्रीगणेशाय नमः ॥

-++:०:++-

सार्थानि वेदान्तवचांसि येन, यो
हिरण्यविद्विट् च सुदर्शनाश्रयः ॥
प्रल्हाद उत्सर्पति यस्य चिन्तया
स मे नृसिंहो यतिराट् सदा गतिः ॥ १ ॥

अतीतपरिच्छेदे लाघवाद्युपोद्बलितानुमानादिनाऽहमर्थातिरिक्त एकः कूटस्थो निर्विशेषश्चिद्रूपः सिद्ध आत्मेत्युक्तम् । तदयुक्तम् । जीवेश्वरयोः जीवानां च परस्परभेदग्राहकप्रत्यक्षादिप्रमाणाविरोधेन लाघवानवतारादित्याद्याक्षेपनिरासाय भेदमिथ्यात्वं निरूपयितुं परिच्छेदान्तरमारभमाणस्तदर्थं प्रदर्शयन् श्रीनृसिंहं प्रार्थयते-नरहरीति ।

नरहरिवपुषा यो दारयन् दानवोरः
प्रकटयति पुमर्थोऽभेददृष्टावितीशः ॥
निजगुणमयमायामात्रमात्रादिभेदो
गुरुतरदयया मां पातु लक्ष्मीसहायः ॥ १ ॥
जगन्नाथाश्रममुनेश्चित्रं चरणरेणवः ।
वाचामगोचरेऽप्यर्थे मूकं वाचालयन्ति माम् २ ॥

अथास्य परस्माद्विभागः परीक्ष्यते । तत्र जीवपरयोः स्वाभाविको भेदः पारमार्थिक इति केचित् । औपाधिकः पारमार्थिक इत्यन्ये ।

औपाधिको ऽनिर्वचनीय इति भगवत्पादीयम-मतानुसारिण: ।

ननु यद्यत्र प्रमाणात: प्रतीयेत तत्तत्र सद्-विपरीतं त्वसदिति स्थिति: । जीवे च परस्माद्भेद: प्रत्यक्षादिभि: प्रतीयते ।

नरसिंहात्मकरूपमास्थाय सर्वदा स्वस्मृतिमतो हिरण्यकशिपोरनर्थहेतुशरीरबन्धमुत्पाटयन् नृसिंहपदलक्ष्यतत्त्वं पदार्थाभेददृष्टौ चाशरीरत्वाख्यमोक्षो भवतीति य: प्रकटयति स इति द्रष्टव्यम् । अभेदप्रमैव पुरुषार्थहेतुरिति मन्वानो भेदमिथ्यात्वमाह-निजेति । निजा अनादिसिद्धा गुणमयी गुणात्मिका या मायाऽनिर्वचनीयाऽज्ञानं तन्मात्रस्तदधीनसत्ताक: प्रमात्रादिभेदो यस्मिन् स तथोक्त इत्यर्थ: ।

बहुवादिसम्मतभेदभङ्गेनाद्वैतस्थापनसामर्थ्यं गुरुचरणसेवयैव प्राप्तमिति द्योतयन् गुरुं महीकरोति-जगन्नाथेति । 'यतो वाचो निवर्तन्ते' इतिश्रुते: शब्दाऽनभिधेयेऽपि वस्तुनि मूकमपि मां वाचालयन्ति पटुतरबहुभाषिणं कुर्वन्तीति यदिदं चित्रमित्यर्थ: । जीवस्वरूपनिरूपणानन्तरं तस्येश्वराद्भेदो विचार्यते इति प्रतिजानीते-अथेति । तदङ्गत्वेन वादिविप्रतिपत्तिं दर्शयति-तत्रेति । वादिनां मध्ये इत्यर्थ: । स्वाभाविक इति । अनौपाधिक इत्यर्थ: । भास्करादिमतमाह-औपाधिक इति । अतिरेकाद्युपाधिप्रयुक्त इत्यर्थ: । सिद्धान्तमाह-औपाधिक इति । अविद्यान्त:-करणाद्युपाधिनिबन्धन इत्यर्थ: ।

अत्र पूर्वपक्षी जीवेश्वरभेदः सन्नेवेति वक्तुं सामान्यतः सत्त्वासत्त्वप्रयोजकमाह-ननु यदीति । ततः किम् ?, तत्राह-जीवे चेति ।

"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"-इत्यादिना भेददर्शनस्य बहुशो निन्दितत्वात् पूर्वपक्षत्वेनापि भेदस्थापनमनुचितमेवेति मन्वानः पूर्वपक्षं नवीनमुखत एव प्रदर्शयति—तत्रेति ।

तत्र नवीनः—प्रत्यक्षं तावज्जीवब्रह्मणोर्भेदे प्रमाणम्। नाहं सर्वज्ञो, नाहं निर्दुःख इत्यनुभवात् । न च ब्रह्मणोऽप्रत्यक्षत्वात्तद्भेदोऽप्यप्रत्यक्ष इति वाच्यम् । यत्र हि यत्सत्त्वमनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः । न तु प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे तन्त्रम् । जलपरमाणौ पृथिवीत्वाभावस्य प्रत्यक्षत्वप्रसङ्गात् । स्तम्भः पिशाचो न भवतीति प्रत्यक्षप्रतीतेश्च । प्रतीत्यनुसारेण हि प्रयोजकं कल्प्यम् । अन्यथा जीवेश्वराभेदश्रुतेरप्रसक्तप्रतिषेधकत्वं स्यात्, तद्भेदश्रुतेश्च त्वदुक्तप्रत्यक्षप्राप्तानुवादकत्वमपि न स्यात्।

नन्वन्तःकरणविशिष्टस्य परस्माद्भेदः प्रतीयते स ममापीष्टः । यश्च नेष्टः शुद्धचैतन्यस्य परस्माद्भेदः । सोऽत्र न भातीतिचेत्, न । योऽहमस्वाप्सं, यस्य ममाज्ञानं, संसारश्च । सोऽहं निर्दुःखाद् भिन्न इत्यज्ञानसंसारयोराश्रयस्यैव

ततो भेदावगमात् । संसाराधारानाधारयोरेव हि भेदे आवयोर्विवादः । ननु चैतन्यस्य चैतन्याद्भेदे" ईश्वरस्यापि जीवाद्भेदे-"ममैवांशो जीवलोके- इत्यादितद्वचनानुमितं तदीयप्रत्यक्षं प्रमाणम् ।

ननु प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे तन्त्रम् । अन्यथा घटे जलपरमाण्वभावः प्रत्यक्षः स्यात् । तथा चाप्रत्यक्षब्रह्मभेदो न प्रत्यक्ष इति नेत्याह-न चेति । अभावप्रत्यक्षत्वे तावदन्यदेव प्रयोजकमित्याह-यत्र हि यत्सत्त्वमिति । तर्कितमिति शेषः । प्रतियोगिप्रत्यक्षत्वं त्वन्वयव्यतिरेकव्यभिचारान्न प्रयोजकमित्याह-नत्विति । प्रतीत्यनुसारेणेति । तदव्यभिचारेणेत्यर्थः । तथा च जीवे ब्रह्मतादात्म्यमनुपलब्धिविरोधीति तदभावः प्रत्यक्ष इति भावः । तत्प्रत्यक्षत्वानङ्गीकारे सिद्धान्ते बाधकमाह-अन्यथेति ।

भेदप्रत्यक्षमङ्गीकृत्य तच्छ्रुतिप्रतिपाद्याभेदाविरोधीत्यभिप्रेत्य शङ्कते - नन्विति । सुषुप्त्यज्ञानाश्रयस्य परस्माद्भेदः प्रतीयते । स च तव निष्कृष्टाहङ्कारचिन्मात्रमेव । तथा च कथं न प्रत्यक्षविरोध इत्याह-न योऽहमिति । ननु तथापि चिन्मात्रं चिन्मात्राद्भिन्नमित्येवमाकारा प्रतीतिर्नास्तीत्यत आह-संसारेति । एवमीश्वरस्यापि जीवाद्भेदे ईश्वरप्रत्यक्षं प्रमाणम् । न च तत्र मानाभावः । अंशांशिभावेन भेदाभिधायितद्वचनमूलत्वेन तदनुमानादित्याह-ईश्वरस्येति ।

प्रत्यक्षादिभिरित्यादिशब्दोपात्तमनुमानं तावदाह-अनुमानमपीति ।

अनुमानमपि जीवब्रह्मभेदे प्रमाणम् । ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवद्दुःखानुभवितृत्वात्, अभ्रान्तत्वात्, असंसारित्वाच्च घटवत् । जीवो ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवान् । असर्वज्ञत्वात्, अस्वतन्त्रत्वाच्च । घटवत् । अत्र जीवब्रह्मशब्दाभ्यां-त्वन्मते तत्त्वमसीत्यत्र तत्त्वम्पदाभ्यां 'जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते' इत्यत्र च जीवपरमात्मशब्दाभ्यां ये विवक्षिते संसाराधाराऽनाधारचैतन्ये, ते एवात्रापि विवक्षिते इति न सिद्धसाधनम् । धर्मिशब्दस्य पित्रादिशब्दवत्संबन्धिशब्दत्वान्मिथ्यात्वं प्रति धर्मिभूतशुक्तिरूप्यसमानसत्ताकभेदेन न सिद्धसाधनम् । न हि माता पूज्येत्युक्ते स्वसुतमाता भार्य्या पूज्यते । धर्मिपदस्थाने स्वपदं वाऽस्तु । सत्तात्रैविध्यमतेऽपि ब्रह्मणि बाधाभावरूपायाः सत्तायास्तदुपलक्षितस्वरूपाया वा सत्त्वान्न बाधः । यद्वा धर्मिसत्तासमानसत्ताकेतिपदस्थाने पारमार्थिकेति, यावत्स्वमनुवर्त्तमानेति वा, स्वाज्ञानकार्यप्रतीत्यविषयेति वा, स्वज्ञानाबाध्येति वा विशेषणं देयम् । स्वशब्दस्य समभिव्याहृततत्तत्परत्वस्य व्युत्पन्नत्वान्न कश्चिद्दोषः ॥

जीवप्रतियोगिको यो धर्मिसत्तासमानसत्ताको भेदस्तद्वदित्यर्थः । जीवप्रतियोगिकभेदवदित्युक्ते मिथ्याभेदेनार्थान्तरता स्यात् तद्वारणाय धर्मीत्यादि । तावत्युक्ते घटादिभेदेनार्थान्तरता । तदर्थं जीवप्रतियोगिकेति । जीवप्रतियोगिकब्रह्मधर्मिकभेदस्य धर्मिसमानसत्ताकत्वं सत्यत्वं विना न सिध्यतीति भावः । असिद्धिवारणाय दुःखपदम् । दुःखानुभवो दुःख्यहमिति ज्ञानं तदभावश्च सर्वज्ञेऽपीश्वरेऽस्तीति नासिद्धिः । जीवप्रतियोगिकब्रह्मधर्मिकभेदस्य सत्यत्वं प्रसाध्य ब्रह्मप्रतियोगिकजीवधर्मिकभेदस्य तत्साधयति-जीव इति । विशेषणकृत्यं तु पूर्ववदेव । ननु जीवब्रह्मपदवाच्ययोर्धर्मिसमसत्ताकभेदाङ्गीकारात्सिद्धसाधनमित्यत आह-अत्रेति । 'जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवत्' इत्याचार्यानुमानमभिप्रेत्याह-जीवा इति । विवक्षिते एवाह-संसारेति । धर्मिशब्दस्य प्रकृतधर्माश्रयपरत्वान्न शुक्तिरजतसमसत्ताकभेदेन सिद्धसाधनमित्याह-धर्मीति । ननु शुक्तिरजतादेः प्रकृतजीवप्रतियोगिकभेदं प्रत्यपि धर्मित्वात्सिद्धसाधनं तदवस्थमित्यरुचेराह-धर्मीति । स्वशब्दस्य समभिव्याहृतयोग्यपरत्वान्नोक्तदोष इति भावः । नन्वद्वैतमते ब्रह्मण एव सत्तारूपत्वात्तत्समानसत्ताया ब्रह्मान्तरत्वात्तदभावाद्बाध इत्यत आह-सत्तात्रैविध्येति । तदुपलक्षितेति । ब्रह्मणोऽपि बाधाभावोपलक्षितस्वरूपोपपत्तेर्न बाध इति भावः । नन्वत्र समानशब्देन सादृश्यं किं विवक्षितमुतैक्यम् ? । नाद्यः[1] । व्यावहारिकभेदसत्ताया अपि सद्व्यवहारानुकू-

१ पक्ष इत्यर्थः ।

लत्वेन ब्रह्मसत्तासद्रूशत्वात्सिद्धसाधनापत्तेः । न द्वितीयः । भेदे ब्रह्मसत्तयैव सद्व्यवहार इति सिद्धान्तेऽप्यङ्गीकारादित्यरुचेराह-यद्वेति । स्वाज्ञानकार्येति । अज्ञानकार्यप्रतीतिर्भ्रान्तिः तदविषयत्वे साधितेऽर्थात्पारमार्थिकत्वसिद्धिरिति भावः । तत्र स्वपदं घटादौ साध्याप्रसिद्धिवारणाय । स्वज्ञानाबाध्येति । भेदस्य ब्रह्मज्ञानाबाध्यत्वे सत्यत्वमेव सिध्यति । अत्रापि स्वपदकृत्यं पूर्ववदेव । स्वशब्देन घटादेरप्यभिधानात्सिद्धसाधनमित्याशङ्क्याह-स्वशब्दस्येति ॥

न च घटादौ पारमार्थिकभेदवत्त्वमसिद्धमिति शङ्क्यम्। अनुमानान्तरेण सिद्धत्वादित्याह-न चाद्ये इति।

न चाद्ये साध्ये दृष्टान्तस्य साध्यविकलता । घटो जीवप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवान् । जीवधर्मिकधर्मिज्ञानाबाध्याभेदाप्रतियोगित्वात् । यद्यत् ज्ञानाबाध्ययद्धर्मिकाभेदाप्रतियोगि । तत्तत् ज्ञानाबाध्यतत्प्रतियोगिकभेदवत् । यथा दूरस्थवनस्पत्योरेक इत्याद्यनुमानेन तत्सिद्धेः ।

यद्वा ब्रह्म तत्त्वतो जीवाभिन्नं नेति साध्यम् । एवं च न साध्यवैकल्यशङ्काऽपि । त्वन्मतेऽपि कल्पिते घटे तात्त्विकभेदवत् तात्त्विकाभेदस्याप्यभावात् । न चान्तःकरणस्यैव दुःखानुभवितृत्वात्तदननुभवितृत्वं जीवे नैकान्तिकमिति वाच्यम् । दुःखादेर्बन्धस्य मोक्षसामाना-

धिकरण्याय जीवस्थत्वात् । त्वदभिमतानर्थाभाव एव तेन विवक्षित इति न कश्चिद्दोषः ।

घटे पटप्रतियोगिकभेदवत्त्वेन सिद्धसाधनतावारणाय जीवेति । घटो जीवप्रतियोगिकभेदवानित्युक्ते व्यावहारिकभेदेन सिद्धसाधनता, तन्निवृत्त्यर्थं प्रतियोगीत्यादि । जीवप्रतियोगिकभेदस्य प्रतियोगिभूतात्मज्ञानाबाध्यत्वे पारमार्थिकत्वसिद्धिरिति भावः । जीवधर्मिको धर्मिज्ञानाबाध्यो योऽयं भेदो जीवे जीवाभेदस्तद्प्रतियोगित्वादिति हेत्वर्थः । घटस्य स्वज्ञानाबाध्यस्वाभेदप्रतियोगित्वादसिद्धिवारणाय जीवधर्मिकेत्युक्तम्। घटस्य जीवधर्मिकारोपिताभेदप्रतियोगित्वादसिद्धिवारणायाबाध्येत्युक्तम् । सामान्यव्याप्तौ साधनवैकल्यपरिहाराय धर्मिज्ञानेत्युक्तम् । विशेषसाध्याप्रसिद्धेः सामान्येन व्याप्तिमाह-यद्यज्ज्ञानेति । प्लक्षस्य न्यग्रोधधर्मिकारोपिताभेदप्रतियोगित्वेऽपि न्यग्रोधज्ञानाबाध्यतदीयाभेदाप्रतियोगित्वमेवेत्यभिप्रेत्य दूरस्येत्युक्तम् ।

प्रतियोगिज्ञानाबाध्यभेदवानित्यत्र किं प्रतियोगिज्ञानं भ्रान्तिरूपं विवक्षितमुत प्रमारूपम् ? । नाद्यः । जीवविषयभ्रान्तिज्ञानाबाध्यतत्प्रतियोगिकभेदस्येष्टत्वात् । द्वितीये किं यत्र यद्विद्यते तद्विषयज्ञानत्वं प्रमात्वमुताबाधितार्थकत्वम् । आद्येऽस्मनापादिमज्जीवज्ञानस्यापि प्रमात्वेन तदबाध्यतद्भेदवत्त्वमिष्टमेव । द्वितीये तज्ज्ञानाबाध्यतत्प्रतियोगिकभेदवदिति सामान्यव्याप्तावपि ज्ञानपदेनाबाधितार्थज्ञानमेव वक्तव्यम् । तच्चासिद्धम् । ब्रह्मव्यतिरिक्तस्य सर्वस्य बाध्यत्वादित्यरुचेराह-य-

द्वेति। अद्वैतमते जीवघटयोरप्यभेदात्साध्याप्रसिद्धिरत्रापीत्याशङ्क्य कल्पिताकल्पितयोस्तात्त्विकाभेदाभावस्तत्रापि संमत इत्याह-एवं चेति। सिद्धान्तिमतेनाऽऽद्यहेतोर्व्यभिचारशङ्कां निराकरोति-न चेति। जीवस्यैव मोक्षान्वयित्वेन दुःखादिबन्धोऽपि तत्रैव वक्तव्यः। तथा च न तत्र हेतुरित्याह-दुःखादेरिति। ननु जीवे कल्पित एव दुःखादिबन्धो न वास्तव इत्याशङ्क्य तर्हि कल्पितस्याभाव एव हेतुरित्याह-त्वदभिमतेति।

ननु जीवस्य संसारित्वे तदभिन्नब्रह्मणोऽप्यसंसारित्वं न स्यादित्यसिद्धिः। तस्यासंसारित्वे तदभिन्नजीवस्यापि तदिति व्यभिचारो वेत्यत आह-न चेति।

न चासंसारित्वादेर्ब्रह्मण्यसिद्धिः। जीवेनानैकान्तिकत्वं वा। त्वन्मतेऽप्यौपाधिकश्यामत्वादिवत्तस्य व्यवस्थितत्वात्। एवं ब्रह्म स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत्। पदार्थत्वात्। घटवत्। जीवस्यापि जीवान्तराद्भिन्नत्वान्न व्यभिचारः। श्रुतिश्च जीवेश्वरयोर्भेदे प्रमाणं द्वा सुपर्णेत्याद्या। स्मृतिश्च—

यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्।

सूत्राणि च 'शारीरश्चोभये ऽपि भेदेनैनमधीयते' इत्यादीनि। न च प्रत्यक्षप्राप्तानुवादोऽयम्। प्रत्यक्षस्य प्रामाण्यसिद्धौ तेनैव भेदसिद्धेः। तदसिद्धौ प्रत्यक्षस्यैक्यश्रुतिविषयापहार इव भेदश्रुतिविषयापहारेऽप्यशक्तत्वात्।

प्रतिबिम्बमुखश्यामत्वस्यौपाधिकत्वेऽपि बिम्बेऽभावात् । बिम्बगतावदातत्वस्य प्रतिबिम्बेऽभावाद्यथा-कल्पितभेदेन तयोर्व्यवस्था । एवं संसारित्वासंसारित्वादेरिति तवाभिमतत्वादित्यर्थः । केवलान्वयिहेतुमप्याह-एवमिति । मिथ्याभेदेन सिद्धसाधनतावारणाय स्वज्ञानाबाध्येत्युक्तम् । स्वशब्दः समभिव्याहृतपरः । जीवे जीवप्रतियोगिकभेदाभावाद् व्यभिचारमाशङ्क्याह-जीवस्यापीति । अनुमानदार्ढ्याय श्रुतिं स्मृतिं च प्रमाणयति-श्रुतिश्चेति । आदिपदेन "य आत्मानमन्तरो यमयति ऋतं पिबन्तौ"इत्यादिः संगृहीता । श्रुत्यपेक्षितन्यायसूचकानि सूत्राण्युदाहरति-सूत्राणि चेति । यः पृथिवीमन्तरो यमयतीत्यादिवाक्येषु श्रूयमाणोऽन्तर्यामी जीव एवेतिशङ्कानिरासायेदं सूत्रम् । न च 'स्मार्त्तमतद्धर्माभिलापात्'इति पूर्वसूत्रान्न अनुवर्तते । तथा च शारीरश्चान्तर्यामी न भवति । तस्य पृथिव्यादिनियमने सामर्थ्याभावात् । न च समर्थेश्वराभिन्नत्वात्सोऽपि समर्थ इति वाच्यम् । यत्कारणमुभयेऽपि काण्वमाध्यन्दिनाश्चैनं शारीरं परस्माद्भेदेनाधीयते । यो विज्ञानमन्तरो यमयतीत्यन्तर्यामिनियम्यत्वेननमामनन्ति काण्वाः, य आत्मानमन्तरो यमयतीति माध्यन्दिना इति सूत्रार्थः । आदिपदेन "गुहां प्रविष्टावात्मानौ" इत्यादि परिगृह्यते । ननु द्वासुपर्णेत्यादिश्रुतेः 'अग्निर्हिमस्य भेषजम्'इतिवदनुवादत्वान्न भेदे तात्पर्यमिति नेत्याह-न चेति । किं पूर्वभावि प्रत्यक्षं प्रमाणमुत न ?। आद्ये आह-प्रत्यक्षस्येति । द्वितीये श्रुतार्थस्य मानान्तरापूर्वत्वाच्छ्रुतिस्तत्परैवेत्यभिप्रेत्याह-तदसिद्धाविति ।

श्रुतेरनुवादत्वेऽपि भेदप्रत्यक्षदार्ढ्यार्थहेतुत्वान्मदिष्टसिद्धिरिति सनिदर्शनमाह-प्रत्युतेति ।

प्रत्युत भेदश्रुतेरेव निगमनवत् तत्त्वमसीति नवकृत्वाऽभ्यासवत्, पिपासितस्यैकजलविषयशब्दलिङ्गप्रत्यक्षरूपप्रमाणसंघवत्, त्वत्पक्षे प्रत्यक्षसिद्धभावरूपाज्ञाने तम आसीदिति श्रुतिवत्, श्रुतेरैक्यतात्पर्ये मद्द्विधतात्पर्यलिङ्गवच्च, प्रत्यक्षानाश्वासनिरासेन दार्ढ्यार्थत्वात् । अग्न्यौष्ण्यप्रामाण्यानिश्चये "अग्निर्हिमस्य भेषजम्" इत्यनुवादो न स्यात् ।

किं च भेदश्रुतेर्भेदप्रत्यक्षानपेक्षत्वान्न सापेक्षानुवादत्वम् । निरपेक्षानुवादत्वं तु धारावाहिकज्ञान इव नाप्रामाण्यहेतुः । उक्तं हि नयविवेके सापेक्षानुवादे हि न प्रतीतिर्न दैवादनुवादे धारावाहिकवदिति ।

किं चायमनुवादो न "वायुर्वै क्षेपिष्ठा" इत्यादिवद्विधिस्तुतये, नापि "दध्ना जुहोति" इत्यत्र जुहोतिरिवान्यविधानार्थः । अन्यविधानाय प्रमाणेनानूदितस्य तात्त्विकत्वनियमात् । अनुवाद्यस्य ह्यसत्त्वे आश्रयासिद्धौ धर्मधर्मिसंसर्गरूपानुमितिवद्य इवानुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितः स्यात् । नापि नेह नानास्तीतिनिषेधार्थः ।

तत्रैव किं च नेत्यनुवादांशस्य सत्त्वात् । न हि "न सुरां पिबेत्" इति निषेधाय 'सुरां पिबेत्' इति वाक्यमपेक्षितम् ।

निगमनवदिति । यथा निगमनावयवो मानान्तरबाधशङ्कानिरासेनानुमानदार्ढ्यार्थं एवमित्यर्थः । पिपासितस्येति । तृषार्तस्यानभ्यस्तजले प्रथमप्रवृत्तप्रमाणदार्ढ्याय प्रमाणान्तरप्रवृत्तिवदित्यर्थः । प्रत्यक्षसिद्धानुवादः प्रत्यक्षदार्ढ्यायेत्येतद्व्यतिरेकमुखेनोपपादयति अन्यथेत्येति ।

अपि च स्मृतिवत्सापेक्षानुवादत्वे निरपेक्षत्वलक्षणं प्रामाण्यं हीयेतापि । न चैतदस्ति ।

अपौरुषेयश्रुतेः प्रत्यक्षानपेक्षत्वादित्यभिप्रेत्याह किं चेति । प्रमितिः प्रतीतिशब्दार्थः ।

किं च "द्वा सुपर्णा" इत्यादिश्रुतेरनुवादमात्रत्वे निरर्थकानुवादायोगाद्विधिस्तुतये ऽन्यविधानाय वा ऽनुवाद्यनिषेधाय वाऽनुवादो वक्तव्यः । न तावदाद्यः अर्थवादत्वस्य विध्येकवाक्यत्वस्य चाभावादित्याह-, किञ्चेति । द्वितीयमपवदति—नापीति । अन्यविधानायानुवादत्वेऽनूद्यस्य तात्त्विकत्वं वाच्यमित्याह-अन्येति । तदेव सदृष्टान्तं विपक्षबाधकमुखेनोपपादयति अनुवाद्यस्येति । तृतीयं दूषयति । नापि नेहेति ।

किं च नेत्यनेन भेदस्याप्यनूदितत्वात्, द्वासुपर्णेत्यनुवादान्तरवैयर्थ्यादित्यर्थः । निषेधकवाक्यगतानुवादे सति पृथगनुवादानपेक्षायामुदाहरणमाह-न हीति ।

किं च स्ववाक्ये एवाज्ञातज्ञापनलक्षणविधिशेष-

त्वसम्भवान्न वाक्यान्तरगतरनिषेधशेषत्वमित्यभिप्रे-
त्याह-अनश्नन्निति ।

अनश्नन्निति विधेयान्तरश्रवणाच्च । यत्त-
न्नेत्यादिनिषेधार्थानुवादलिङ्गाभावाच्च । तदभा-
वेऽपि निषेधायानुवादे तत्सत्यमित्याद्यसद्वा-
इदमग्र आसीदिति निषेधाय ब्रह्मसत्त्वानुवा-
दकं किं न स्यात । सर्वप्रत्ययवेद्यत्वाद् ब्रह्मस-
त्त्वस्य ।

किं च नान्योऽतोऽस्तीति श्रुतिरेव "भिन्नो
ऽचिन्त्यः परो जीवसङ्घात्" इत्याद्यभेदनिषेधा-
यानादिवादिपरंपराप्राप्तैक्यानुवादिनी किन्न
स्यात्। न चाननुवादकत्वेऽपि बाध्यव्यावहारिक-
भेदपरा श्रुतिः । अप्रामाण्यापातात् । न चाभे-
दश्रुतिविरोधात् तदिष्टम् । तस्या लक्षणयाऽखंड-
चिन्मात्रपरत्वेन भेदाविरोधित्वात् । वैपरीत्य-
स्यापि सुवचत्वात् । यदि तु भेदश्रुतिः प्रत्यक्ष-
प्राप्तार्थत्वाद् दुर्बला, तर्ह्यैक्यश्रुतिरपि तद्वि-
रुद्धत्वात्तथा स्यात् । यदि चैक्यश्रुतिः प्रत्यक्षा-
विरुद्धैक्यपरा तर्हि भेदश्रुतिरपि तदसिद्धत्रिका-
लाबाध्यभेदपराऽस्तु । न च षड्विधतात्पर्यलिङ्ग-
वत्त्वादैक्यश्रुतिः प्रबला लिङ्गानां तात्पर्यमात्रज्ञा-
पकत्वेनार्थतथात्वाज्ञापकत्वात् । स्वीकृतं च भे-

दृग्श्रुतेरनुवादकत्वं त्यजता त्वयापि भेदपरत्वम् ।

निषेधशेषत्वे ज्ञापकमिति यत् तन्नेत्यादि, तदपि नेत्याह-यत्तदिति । अनुवाद एव निषेधशेषत्वे लिङ्गमित्याशङ्क्यातिप्रसङ्गमाह-तदभावे ऽपीति । तत्सत्यमित्यस्यानुवादकत्वमेव नास्ति ब्रह्मसत्ताया अन्यतोऽसिद्धत्वादित्याशङ्क्याह-सर्वेति । तव मते घटः सन्नित्यादिसत्ताबुद्धेर्ब्रह्मसत्ताविषयत्वादिति भावः । वस्तुतस्तु भेदश्रुतिगम्यनिषेधशेषाभेदानुवादाय वा भेदश्रुतिः न चाभेदस्याप्राप्तेरननुवादः । अनाद्यद्वैतवादिपरम्पराप्राप्तत्वात् ।

यद्वैके आहुरसद्वेदमग्र आसीदित्यसद्वादिसिद्धासदनुवादवदित्यभिप्रेत्याह-किं चेति । ननु श्रुतेर्भेदपरत्वेऽपि शब्दान्तराभ्यासादिकर्मभेदप्रमाणवद्व्यावहारिकभेदपरत्वमेवाऽस्त्वित्याशङ्क्य दृष्टान्तासंप्रतिपत्त्या दूषयति-न चाननुवादत्व इति । तत्त्वमसीत्यादिश्रुतिविरोधाद्भेदश्रुतेरप्रामाण्यमेवेत्याशंक्य तस्याः श्रुतेर्भेदाभावाविषयत्वाद्विरोध एव नास्तीत्याह-न चेति । विरोधमङ्गीकृत्याप्याह-वैपरीत्येति । भेदश्रुतेरधिगतार्थत्वाद्दौर्बल्यं चेदभेदश्रुतेः प्रत्यक्षविरुद्धार्थत्वात्तुल्यत्वमित्याह-यदि त्विति । ननु व्यावहारिकभेदविषयप्रत्यक्षेण न पारमार्थिकाभेदविषयश्रुतेर्विरोध इति चेत्तर्हि पारमार्थिकभेदविषयश्रुतेर्न तेनाधिगतार्थतेत्याह-यदि चेति । ननूपक्रमोपसंहारौ, अभ्यासो, ऽपूर्वताफलम्, अर्थवादोपपत्ती चेत्येतानि तात्पर्यलिङ्गान्यभेद

श्रुतेः सन्ति । ततः सा प्रबलेति चेन्न । एतैर्लिङ्गैरभेद-श्रुतेस्तात्पर्यवत्त्वसिद्धावपि तदर्थस्य विधिवाक्यार्थवत्पारमार्थिकत्वासिद्धेरित्याह-न च षड्विधेति । तर्हि तत्परत्वमेव प्राबल्यहेतुरित्याशङ्क्यानुवादत्वेऽपि व्यावहारिकभेदपरा श्रुतिरिति चोद्यसमये भेदश्रुतेस्तत्परत्वं त्वयाऽपि स्वीकृतम् । वस्तुतस्तु मया वा स्वीकृतमित्याह-स्वीकृतं चेति ।

लिङ्गं विना स्वीकारमात्रेण कथं भेदे तात्पर्यसिद्धिरित्यत आह-अस्ति चेति ।

अस्ति चात्रापि "अनश्नन्पूर्णः परो जीवसंघो ह्यपूर्ण" इत्याद्युपपत्तिरूपं "सत्यं भिदा सत्यं भिदा" इत्यभ्यासरूपं च तात्पर्यलिङ्गम् । तद्बहुत्वं च त्वत्पक्षे प्रमाणसंघवद् व्यर्थम् । अस्ति चात्र भेदे आथर्वणश्रुतौ उपक्रमो 'द्वासुपर्ण-इति । 'परमं साम्यमुपैति' इत्युपसंहारः । "तयोरन्य अनश्नन्नन्य" इत्याद्यभ्यासः शास्त्रैकगम्येश्वरप्रतियोगिकस्य तद्धर्मिकस्य वा कालत्रयाबाध्यभेदस्य शास्त्रं विनाऽप्राप्तेरपूर्वता' पुण्यपापे विधूयेति फलं च । "अस्य महिमानमिति वीतशोक" इतिस्तुतिरूपार्थवादः । अस्ति अनश्नन्नन्य इत्युपपत्तिश्च । निषेधवाक्यत्वादैक्यश्रुतिः प्रबला चेद् 'असद्वा' इत्यादिवाक्यं सत्यज्ञानादिवाक्यात्प्रबलं स्यात् ।

किं च भेद एव ऐक्यनिषेधरूपः । किं च भेदश्रुतिरेव प्रबला । प्रत्यक्षादिसंवादान्निरवकाशत्वाच्च । किं चायं भेदो न व्यावहारिकः । मुक्तावपि स्मृतेः, श्रुतेश्च । न हि सा मुक्तिरवान्तरा ।

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" ॥

इति स्मृतौ सर्गाद्यसम्भवोक्तेः ।

'न यत्र माया किमुतापरे हरे-
रनुव्रता यत्र सुरा सुरार्चिताः ।
श्यामावदाताः शतपत्रलोचनाः
पिशङ्गवासाः सुरुचः सुवेशसः'
इति स्मृतौ मायानिषेधाच्च ॥

अशनानशनपूर्णत्वापूर्णत्वरूपविरुद्धधर्मव्यवस्थाया अभेदे संभवाद्भेद एवोपपत्तिरिति भावः । ननु अभेदतात्पर्ये लिङ्गषट्कं भेदतात्पर्ये तु द्वयमेवेति वैषम्यमित्यत आह-तद्बहुत्वमिति । ननु पञ्चावयवैर्विनाऽनुमेयविशेषवत्षड्विधलिङ्गैर्विना न तात्पर्यसिद्धिरित्यत आह-अस्ति चेति । परमं साम्यमिति । सादृश्यस्य भिन्नाश्रयत्वादुपसंहारो भेदविषय इति भावः । अपूर्वतामाह-शास्त्रैकेति । धर्म्यादिग्रहं विना भेदग्रहायोगाद्धर्मिणः प्रतियोगिनो वेश्वरस्य मानान्तरागोचरत्वाद्भेदोऽपि तथैवेत्यपूर्वतेत्यर्थः । अस्य-ईश्वरस्य । महिमानमिति । इयं च स्तुतिरेव, न फलं जीवस्येश्वरमहिमायोगादिति

दित्यादिना मोघमित्येतेनाप्यनात्मज्ञस्य कर्माधिकृतस्य कर्मानुष्ठाने बहुविधं कारणमुक्तं तदकरणे च मङ्कीर्तनं कृतं सर्वथाधिकृतेन कर्म कर्तव्यमेवेति प्रकरणार्थः। एवं स्थिते किं सर्वैरेव चक्रमनुवर्तनीयमुताशुद्धचित्तेनानात्मज्ञेनेत्यर्जुनसंशयमालक्ष्य स्वयमेव ब्रह्मविदः कर्मानुपयोगमाह यस्त्विति। यस्त्वात्मज्ञाननिष्ठः आत्मन्येव रतिर्न विषयेषु यस्य स आत्मरतिरेव स्याद्भवेत् तथात्मनैव तृप्तो नान्नपानादिनेत्यात्मतृप्तः प्राप्तपरमानन्दात्मनैव तृप्तत्वादन्नरसादावनासक्त इत्यर्थः। आत्मविदः सर्वतो वैतृष्ण्यं दृष्टं तन्मुमुक्षुणा यत्नेन सम्पाद्यमित्यभिप्रेत्याह आत्मन्येव च सन्तुष्टः सन्तोषो हि बाह्यार्थलाभेन सर्वस्य भवति तमनपेक्ष्यात्मन्येव सन्तुष्टः सर्वतो विरक्त इत्यर्थः रतितृप्तिसन्तोषाणां मोदप्रमोदानन्दवदवान्तरभेदः आत्मक्रीड आत्मरतिः क्रियावानेष च ब्रह्मविदां वरिष्ठ इतिश्रुतेः। यद्वा विषयारामस्य हि स्रक्चन्दनवनितादिषु रतिर्भवति मनोज्ञान्नपानादिना तृप्तिः पशुपुत्रसुवर्णादिलाभेन रोगाद्यभावेन च सन्तुष्टिर्भवति लब्धपरमानन्दस्य तु द्वैतदर्शनाभावादार्तितुच्छत्वाच्चानात्मविषयरतितृप्तितुष्ट्यभावादुपचारादेवमुच्यते—आत्मरतिरात्मतृप्त आत्मसन्तुष्ट इति बोध्यम्। यः कश्चिदपि मनुष्य एवम्भूतः स एव कृतकृत्यो न तु ब्राह्मणत्वादिप्रकर्षेणेति कथयितुं मानव इत्युक्तम् तस्यैवम्भूतस्याधिकारहेत्वभावात्किमपि कार्यं कर्तव्यं वैदिकं लौकिकं वा न विद्यते इत्यर्थः॥ १७॥

इतश्चात्मविदो न किंचित्कर्तव्यमित्याह नैवेति। यद्वा चतुर्थपादमेव विवृणोति नैवेति। तस्यात्मरतेः कृतेन कर्मणा अर्थोऽभ्युदयलक्षणं मोक्षलक्षणं वा प्रयोजनं नैवास्ति तस्य स्वर्गाद्यभ्युदयार्थित्वाभावान्मोक्षस्य च कर्मासाध्यत्वादित्यर्थः परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेनेति श्रुतेः। कृतेन कर्मणा अकृतो नित्यो मोक्षो नास्तीत्यर्थः ज्ञानसाध्यत्वस्यापि व्यावृत्तिरेवकारेण सूचिता आत्मरूपस्य हि मोक्षस्य नित्यप्राप्तत्वादज्ञानमात्रमप्राप्तिस्तस्मिंस्तु तत्त्वज्ञानेन निवृत्ते तस्यात्मविदो न किंचित्कर्मसाध्यं वा प्रयोजनमस्तीत्यर्थः। आत्मविदो नित्याद्यकरणे प्रत्यवायो भविष्यतीत्याशङ्कां परिहरति नाकृतेनेति। अकृतेन नित्यकर्माकरणेन इहलोके गर्हितत्वरूपः प्रत्यवायप्राप्तिरूपो वा कश्चनार्थो नास्तीत्यर्थः। सर्वत्रोपपत्तिमाहोत्तरार्द्धेन नचेति। चो हेतौ यस्मादात्मविदः सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु कोऽप्यर्थव्यपाश्रयः प्रयोजनसम्बन्धो नास्ति कञ्चिद्भूतविशेषमाश्रित्य कोऽपि क्रियासाध्योऽर्थो नास्तीति वाक्यार्थः अतोऽस्य

कृताकृते निष्प्रयोजने नैनं कृताकृते तपत इति श्रुतेः तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवतीति श्रुत्या देवा अपि तस्य मोक्षाभवनाय न समर्था इत्युक्तेन विघ्नाभावार्थमपि देवाराधनरूपकर्मानुष्ठानमित्याशयः । एतादृशो ब्रह्मविद्भूमिकासप्तकभेदेन निरूपितो वसिष्ठेन—

ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता ।
विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ इति ।

तत्र नित्यानित्यवस्तुविवेकादिपुरस्सरा फलपर्यवसायिनी मोक्षेच्छा प्रथमा ततो गुरुमुपसृत्य वेदान्तवाक्यविचारः श्रवणमननात्मको द्वितीया । ततो निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यत्वं तृतीया एतद्भूमिकात्रयं साधनरूपं जाग्रदवस्थेोच्यते जगतोऽभेदेन भानात् । ततो वेदान्तवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्कारश्चतुर्थी भूमिका फलरूपा सत्त्वापत्तिः स्वप्नावस्थेोच्यते स्वप्नवत्सर्वस्य जगतो मिथ्यात्वेन स्फुरणात् एतां भूमिं प्राप्तो ब्रह्मविदित्युच्यते । पञ्चमीषष्ठीसप्तम्यस्तु भूमिका जीवन्मुक्तेरेवावान्तरभेदाः तत्र सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि या निर्विकल्पकसमाध्यवस्था सा संसक्तिरिति सुषुप्तिरिति वोच्यते ततः स्वयमेव व्युत्थानात् तद्वान्योगी ब्रह्मविद्वरः ततस्तदभ्यासपरिपाकेण या चिरकालावस्थायिनी सा पदार्थाभाविनीति गाढसुषुप्तिरिति चोच्यते ततः स्वयमनुत्थितस्य योगिनः परप्रयत्नेनैव व्युत्थानात् सोऽयं ब्रह्मविद्वरीयान् । यस्तु समाध्यवस्थाया न स्वतो न परतो व्युत्थितो वा भवति सर्वथा भेददर्शनाभावात् किन्तु सर्वदा तन्मय एव स्वप्रयत्नमन्तरेणैव परमेश्वरप्रेरितप्राणवायुवशात् अन्यैर्निर्वाह्यमानदैहिकव्यवहारः परिपूर्णपरमानन्द एव सर्वतस्तिष्ठति सा सप्तमी तुरीयावस्था तां प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते तद्यथा हि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरो मृतः प्राणो ब्रह्मैव तेजएवेति श्रुतेः । अत्र प्रथमभूमित्रयमारूढोऽज्ञोपि न कर्माधिकारी किं पुनस्तत्त्वज्ञानी तद्विशिष्टो जीवन्मुक्तो वेत्याशयः॥ १८ ॥

यो योगारूढस्तस्यैव मुक्तयतेरात्मारामस्य कर्म न कर्तव्यं तव त्वारुरुक्षोर्मोक्षार्थिनः कर्म कर्तव्यमेवेति बोधयितुमाह—

**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**

**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

तस्मादिति। हि यस्मात्कारणान्मुमुक्षुः पुरुषः स्वयमसक्तः फलाभिसन्धिरहितो भूत्वा विहितं कर्माचरन् सम्यगनुतिष्ठन्नेव परं परमपुरुषार्थं मोक्षमाप्नोति यथाऽयमात्मरतिरस्मिन् जन्मनि जन्मान्तरेषु च वैदिकं कर्म कृत्वैव चित्तशुद्धिं प्राप्यात्मज्ञानेन मुक्तिं प्राप्तवान् तथाऽन्योऽपि कर्मभूमिष्ठः कर्म कृत्वैव ज्ञानं प्राप्य मुक्तो भवति नैवान्यथा तस्मात्त्वमपि मुमुक्षुरसक्तो निष्कामः सन् सन्ततं कार्यं कर्तव्यं वैधं नित्यं नैमित्तिकं च कर्म समाचर श्रद्धाभक्तिभ्यामीश्वरार्पणबुद्ध्या सम्यक्कुरु कर्मणैव चित्तशुद्धिं प्राप्य ज्ञानञ्च मोक्षञ्च प्राप्स्यसीत्यर्थः।

अन्येतु तत्त्वज्ञाननिष्ठत्वाभावे निष्कामकर्मानुष्ठानमावश्यकं चित्तशुद्धिहेतुत्वात्तस्येत्याहु तस्मादिति। यस्मान्न त्वमेवम्भूतो ज्ञानी किन्तु कर्माधिकृतो मुमुक्षुरेव तस्माज्ज्ञाननिष्ठत्वाभावादसक्तः फलकामनारहितः सततं सर्वदा कार्यं अवश्यकर्तव्यं यावज्जीवमग्निहोत्रं जुहोतीत्यादिश्रुतिविहितं तमेतं वेदानुवचनेनेत्यादिना ज्ञाने विनियुक्तं च कर्म नित्यनैमित्तिकलक्षणं समाचर यथाशास्त्रं कुरु। मोक्षमेवापेक्षमाणस्य कथं कर्मणि नियोगः स्यादित्याशङ्क्याह असक्तो हीति। हि यस्मादसक्तः कर्माचरन्नीश्वरप्रीत्यर्थं कुर्वन् सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण परं मोक्षमाप्नोति पूरुषः पुरुषः स एव सत्पुरुषो नान्य इत्याशय इत्याहुः ॥ १९ ॥

ननु न केवलं ज्ञानिन एव कर्मानधिकारः किन्तु ज्ञानार्थिनोऽपि विरक्तस्य ज्ञाननिष्ठाफलभूतमोक्षप्राप्त्यर्थं श्रवणमनननिदिध्यासनानुष्ठानाय सर्वकर्मसंन्यासस्यावश्यकत्वात्तथाच मयापि विरक्तेन ज्ञानार्थिना कर्माणि त्याज्यान्येवेत्यर्जुनाशङ्कां क्षत्रियस्य संन्यासानधिकारप्रतिपादनेन निराकरोति—

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः।**
**लोकसङ्ग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥ २० ॥**

कर्मणैवेति। हि यस्माज्जनकादयो जनकाजातशत्रुप्रमुखा क्षत्रियाः कर्मणैव शुद्धसत्त्वाः विरक्ताः सन्तः संसिद्धिं श्रवणादिसाध्यज्ञाननिष्ठाद्वारा मोक्षलक्षणां संसिद्धिमास्थिताः प्राप्ताः तस्मात्त्वमपि क्षत्रियो विविदिषुः सन् तदर्थं कर्म कर्तुमर्हसीत्यन्वयः। ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति संन्यासविधायके वाक्ये

ब्राह्मणत्वस्य विवक्षितत्वेन क्षत्रियवैश्ययोः संन्यासाभावोक्तेश्च कर्म कर्तुमर्हसि वार्तिककृता तु प्रौढिवादमात्रेण ब्राह्मणत्वस्योपलक्षणत्वं मत्वा क्षात्रियवैश्ययोरपि सन्न्यासोस्तीत्युक्तमिति बोध्यम् । जनकादयो यदि प्राप्तसम्यग्दर्शनास्तदापि यथा तैः कर्म कृतं तथा त्वयापि सम्यग्दर्शनवता कर्म कर्तव्यमित्याह लोकेति । लोकानां स्वे स्वे धर्मे प्रवर्तनमुन्मार्गान्निवर्तनञ्च लोकसङ्ग्रहस्तं सम्पश्यद्भिर्यथा तैः कृतकृत्यैरपि प्रारब्धवशात्कर्मैव कृतं तथा त्वमपि प्रारब्धकर्माधीनो लोकसङ्ग्रहं सम्पश्यन्कर्म कर्तुमर्हसीत्यर्थः ।

अन्ये तु धर्मेण पापमपनुदतीति, 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति ज्ञानादेव तु कैवल्यमित्यादिश्रुतिस्मृतिभिर्धर्मानुष्ठानादेव पापक्षयः पापक्षयादेव ज्ञानं ज्ञानादेव मोक्ष इति प्रतिपाद्यते ततो ज्ञातात्मतत्त्वस्य मुमुक्षोरवश्यं कर्मैव कर्त्तव्यमित्युपदिश्यास्मिन्नर्थे वृद्धाचारं प्रमाणयति कर्मणैवेति । जनक आदिर्येषां ते जनकादयोऽश्वपतिभगीरथादयः क्षत्रियाः कर्मणैव श्रौतस्मार्तकर्मानुष्ठानेनैव चित्तशुद्धिं प्राप्य ज्ञानेन संसिद्धिं मुक्तिमास्थिताः प्राप्ताः कृतार्था जाता इत्यतस्त्वमपि कर्मैव कृत्वा तदुत्पन्नचित्तशुद्ध्या ज्ञानं प्राप्य मुक्तो भूत्वा सुखेन तिष्ठेत्यर्थः । यद्वा जनकादयो निरूढया ज्ञानयोगनिष्ठया संसिद्धिं मुक्तिं प्राप्य स्वयं कृतार्था अपि मूढजनतारणार्थं कर्मणैव सह स्थिताः कर्म कुर्वन्त एव स्थिता इत्यर्थः । आरूढानामेवैवं सति किमुतानात्मज्ञेनारुरुक्षुणा त्वया मोक्षार्थं कर्म कर्त्तव्यमेवेति निर्द्धार्येदानीमुक्तेनाप्याधिकारिकेण लोकहितार्थं कर्म कर्तव्यमेवेति बोधयितुं तद्दृष्टान्तत्वेन जनकादीनां ज्ञानवृद्धानां प्रवृत्तिमुदाहृत्य तवाप्येतादृशोऽधिकारो यद्यस्ति तिष्ठतु तथापि जनकादिवत्त्वया लोकहितार्थमपि कर्मावश्यं कर्तव्यमेव महापुरुषप्रवृत्त्या खलु शास्त्रस्य प्रामाण्यं कर्मणः प्राशस्त्यमज्ञतरणं च पारम्पर्येणाचारप्रचयोऽपि च सिद्ध्यत्यतो मुक्तेनापि महताऽवश्यं कर्म कर्त्तव्यमित्याशयेनाह लोकसङ्ग्रहमिति । लोकः पामरजनस्तस्य सङ्ग्रहः सत्कर्ममार्गप्रदर्शनेन तारणमुन्मार्गान्निवारणं च तमिमं लोकसङ्ग्रहमेवार्थं सम्पश्यन् मया क्रियमाणं कर्म लोकोपकाराय भवतीति पश्यन्नपि कर्म कर्तुं त्वमर्हसीत्यर्थ इत्याहुः ॥ २० ॥

मत्कर्तृकं कर्म कथं लोकस्योपकाराय भवतीति उच्यते—

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

वेदशास्त्राध्ययनाध्यापनयोः तदर्थज्ञानज्ञापनयोस्तदुक्तकर्मानुष्ठानानु-

ष्ठापनयोश्च दक्षिणः कुलशीलादिमहत्त्वसम्पन्नश्च यो द्विजः श्रेष्ठः यद्यच्छ्रौतं स्मार्तं वा अन्यद्वाऽऽचरति नियमेनानुतिष्ठति मुमुक्षुरितरः पामरोऽपि तत्तदेव कर्माचरति न तु स्वयमप्यन्यत्करोति शास्त्रतज्ज्ञानतदुक्तकर्मपरिज्ञानाभावात्किञ्चोक्तलक्षणः श्रेष्ठो यद्यत् शास्त्रं प्रमाणं कुरुते इदमेव प्रमाणमिति व्यवहरति लोको मूढजनस्तदेव तेन प्रमाणीकृतमेव शास्त्रमनुवर्तते तदेव शास्त्रं स्वयं प्रमाणं करोति श्रेष्ठानुसारी पामरो जनो भवतीत्यर्थः एतेन कृतार्थस्यापि श्रेष्ठस्य लोकहितार्थं कर्म कर्त्तव्यमेवेति सिद्धम् ।

अन्ये तु एवं कृतार्थेनापि लोकसङ्ग्रहार्थं विहितं कर्म कर्तव्यमित्युक्त्वाऽथ मयि कर्मणि प्रवृत्ते कथं लोकसङ्ग्रहो भविष्यतीत्याशङ्क्य तत्प्रकारं दर्शयति यद्यदिति। श्रेष्ठः प्रधानभूतो राजादिर्यद्यत् शुभमशुभं वा कर्माचरति इतरः प्राकृतस्तदनुसारी जनस्तत्तदेवाचरति न त्वन्यत्स्वातन्त्र्येण, श्रेष्ठाचारानुविधायित्वाल्लोकस्येत्यर्थः । तथाच कृतार्थेनापि लोकमर्यादास्थापनार्थं हितं कर्म कर्तव्यमेवेति भावः । श्रेष्ठानुसारित्वमितरेषामाचारे दर्शयित्वाऽथ ननु स्वयमेव लोकः शास्त्रमालोक्याशास्त्रीयश्रेष्ठाचारं परित्यज्य शास्त्रीयमेव कुतो नाचरतीत्याशङ्क्याचारवत्प्रतिपत्तावपि श्रेष्ठानुसारितामितरजनस्य दर्शयति स यदिति । स श्रेष्ठो यल्लौकिकं वैदिकं वा प्रमाणं कुरुते प्रमाणत्वेन मन्यते लोकोऽपि तदेवानुवर्तते प्रमाणं कुरुते न तु स्वातन्त्र्येणेत्यर्थः तथा च प्रधानभूतेन त्वया लोकसंरक्षणार्थं विहितं कर्म कर्तव्यमेव प्रधानानुयायिनो जनव्यवहारा भवन्तीति न्यायादित्याशय इत्याहुः ॥ २१ ॥

अहमिव त्वमपि लोकसङ्ग्रहं कुर्विति स्वदृष्टान्तेनोक्तमेव दृढयति—

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

नेति । हे पार्थ मम परमेश्वरस्य त्रिष्वपि लोकेषु किमपि कर्तव्यं नास्ति कुतो यतोऽनवाप्तमप्राप्तफलं किञ्चिन्मयाऽवाप्तव्यं नास्ति तथापि कर्मणि वर्त एवाहं कर्म करोम्येवेत्यर्थः । त्वमपि मत्सम्बन्धित्वादहमिव कर्माणि वर्तितुमर्हसीति सूचनार्थं सम्बोधनम् । शुद्धवंशोद्भवस्त्वं मन्मतमेव कर्तुमर्हसीति वा ।

अन्ये तु ननु महात्मनः कृतार्थस्य कर्मणा साध्यमपश्यतः कर्मकरणं कुत्रापि न दृष्टमित्याशङ्कायामस्मिन्नर्थे त्वहमेव प्रमाणमित्याह न मे इति । हे पार्थ षड्गुणैश्वर्यसम्पन्नस्यावाप्तसर्वकामस्य सर्वेश्वरस्य मे

यीत्किञ्चित्कार्यमाप्तव्यमर्थमुद्दिश्य कर्त्तव्यं कर्म नास्ति तत्कुतो यतोऽनवाप्तमप्राप्तं सत्तु मम क्रिययाऽवाप्तव्यं प्राप्तव्यं वस्तु त्रिषु लोकेषु किञ्चिदपि न विद्यते गृहस्वामिनो गृहस्थज्ञातद्रव्यवद्ब्रह्माण्डस्थं सर्वं वस्तु ब्रह्माण्डस्वामिनो मे प्राप्तमेव न तु प्राप्तव्यं किञ्चिदस्ति एवं महाभाग्यवैराग्यज्ञानसमृद्धोऽप्यहं लोकसङ्ग्रहात्मके कर्मणि वर्त एव हि चकारो ह्यर्थ मम लौकिके वैदिके च कर्मणि प्रवर्तनं भवता प्रत्यक्षसिद्धमिति हिः प्रसिद्धिबोधनार्थ इत्याहुः ॥ २२ ॥

लोकसङ्ग्रहोपि न कर्तव्यो विफलत्वादित्याशङ्क्याह—

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

यदीति । हे पार्थ यदि पुनरहमतन्द्रितोऽनलसः सन्कर्मणि जातु कदाचिन्न वर्तेयं नानुतिष्ठेयं कर्माणि तदा मम श्रेष्ठस्य सतो वर्त्म मार्गं मनुष्याः कर्माधिकारिणः सन्त अनुवर्तन्ते अनुवर्तेरन् सर्वशः सर्वप्रकारैरित्यर्थः इतर जना अपि मम मार्गमनुवर्तन्ते त्वन्तु मत्सम्बन्धी सन् नानुवर्तसे इत्यत्याश्चार्यमिति सूचनाय पार्थेति संबोधनम् ॥ २३ ॥

श्रेष्ठस्य तव मार्गानुवर्तित्वं मनुष्याणामुचितमेव को दोष इत्यतआह—

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

उत्सीदेयुरिति । अहमीश्वरश्चेद्यदि कर्म न कुर्यां तदा मदनुवर्तिनां मन्वादीनामपि कर्मप्रवृत्त्यनुपपत्तेः लोकस्थितिहेतोः कर्मणो लोपेनेमे लोका उत्सीदेयुर्विनश्येयुः ततश्च वर्णसङ्करस्य च कर्ताऽहमेव स्यान्तेन चेमाः सर्वाः प्रजा अहमेवोपहन्यां धर्मलोपेन विनाशयेयं कथं च प्रजानामनुग्रहार्थं प्रवृत्त ईश्वरोऽहं ताः सर्वा विनाशयेयमित्याशयः तथाच यथाऽहमीश्वरोऽपि सन् लोकोपकारार्थं कर्म करोमि तथान्यैरपि तदर्थं तत्कर्तव्यमिति भावः । यद्वा न केवलं लोकसङ्ग्रहं सम्पश्यन्कर्म कर्तुमर्हसि अपि तु श्रेष्ठाचारत्वादपीत्याह यद्यदिति । तथाच मम श्रेष्ठस्य यादृश आचारस्तादृशएव मदनुवर्तिना त्वयाऽनुष्ठेयो न स्वातन्त्र्येणान्य इत्यर्थः । कीदृशस्तवाचारो यो मयाऽनुवर्तनीय इत्याकाङ्क्षायां न मे पार्थेत्यादिभिस्त्रिभिस्तत्प्रदर्शनमिति योजना।

अन्ये तु ननु सर्वेश्वरस्य तव लोकसङ्ग्रहोऽपि न कर्तव्य अनर्थाभावादित्याशङ्क्याश्रेष्ठः श्रेष्ठानुसारीति न्यायेन सर्वज्ञोऽयं कृष्ण इति

सर्वे मदनुसारिणो भवन्ति मय्यकर्मणि सति सर्वेऽप्यकर्माणो भवेयुस्तेन लोकक्षतिरूपोऽनर्थो भवेदतः कर्म मम कर्तव्यमेवेत्याशयेनाह यदीति द्वाभ्यां। अहं कृतार्थोऽस्मीति वा न कर्मणा मम साध्यमस्तीति वाऽप्यहमतन्द्रितः मन्त्रतन्त्रप्रयोगादावप्रमत्तो भूत्वा जातु क्वचित्कदाचिदपि कर्मणि विहिते न वर्तेयं यदि विहितकर्मकर्त्ता न स्यां चेन्मामकर्माणं दृष्ट्वा सर्वे मनुष्या अप्यकर्माणो भवेयुर्हि यस्मान्मनुष्याः सर्वे भगवानयं सर्वज्ञ इति मयि सर्वज्ञत्वबुद्ध्या मम वर्त्म मदीयमेव मार्गमनुवर्तन्ते अश्रेष्ठस्य श्रेष्ठानुसारित्वनियमान्मया कर्माणि त्यक्ते स्वयमपि कर्म त्यजेयुरित्यर्थः। ननु तैरपि कर्म त्यज्यतां ततः कोऽनर्थ इत्यत आह उत्सीदेयुरिति। सर्वैः कर्माणि परित्यक्ते अन्नाद्भवन्ति भूतानीत्युक्तरीत्या हविर्भागाद्यभावाद्देवाः प्रक्षीणा भवेयुर्वृष्ट्याद्यभावान्मनुष्यादीनामनुत्पत्तिरुत्पन्नानां च विनाशः स्यादेतावानेवानर्थो न भवति किन्तु वर्णसाङ्कर्यमपि च स्यादित्याह सङ्करस्येति। कृतकृत्यत्वाभिमानेनाहं लोकस्थितिकारणं वैदिकं कर्म त्याजयित्वा सङ्करस्य च कर्ता स्यां तत्तद्वर्णजातिभेदव्यवस्थापककर्माभावे सर्वेषामैकरूप्यापत्तौ वर्णाः सङ्कीर्यन्ते सोऽपि वर्णसङ्करो मत्कर्तृक एव स्यादेवं साङ्कर्यसम्पादनेनाहं सर्वाः प्रजा उपहन्यां सर्वासां प्रजानामुपहतिकर्ता च स्यां उपहतिर्दुर्गतिप्राप्तिः सद्गतिहेतोः सत्कर्मानुष्ठानस्याभावात्सर्वे नरकभाजो भवेयुरित्यर्थः यत एषाऽनर्थपरम्परापत्तिस्ततः कृतकृत्यस्यापि मम तव चाप्यात्मविदोऽन्यस्य च लोकहितार्थं कर्म कर्तव्यमेवेति सिद्धमित्याहुः ॥ २४ ॥

तर्हि लोकहितार्थं कर्मणि प्रवृत्तेन विदुषा कथं कर्म कर्तव्यमित्याकाङ्क्षायामाह—

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५ ॥**

सक्ता इति। अविद्वांसोऽनात्मज्ञाः कर्मणि कर्मजन्यफले स्वर्गपुत्रधनादौ सक्ता आसक्तिमन्तो भूत्वा नियमेन श्रद्धाभक्तिभ्यां यथा विहितं कर्म कुर्वन्ति तथैव वर्तमानः सन् लोकसङ्ग्रहं चिकीर्षुर्विद्वान् ब्रह्मविदधिकारिकः स्वयमसक्तः कर्तृत्वाभिनिवेशरहितः फलापेक्षारहितोऽपि भूत्वा कर्म कुर्यादेवं कुर्वन् स्वयं तीर्णः परानपि तारयतीति भावः। कर्तृत्वाभिनिवेशराहित्यं साकल्यवैकल्ययोर्हर्षविषादशून्यत्वं च तज्ज्ञानयोर्वैलक्षण्यं नियमेन कर्मकरणं तूभयत्र सममेव ॥ २५ ॥

किञ्च—

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तस्समाचरेत् ॥ २६ ॥**

विद्वान्ब्रह्मवित्स्वयं युक्त आत्मनो देहादितादात्म्याभावदर्शनयोगनिष्ठो भूत्वा समाचरन् कालोचितं कर्म कुर्वन् कर्मसङ्गिनां कर्मासक्तानां फलापेक्षया नियमेन कर्म कुर्वतामित्यर्थः । यद्वा देहेन्द्रियादिभिरेव क्रियमाणेषु कर्मस्वहङ्कर्ता भोक्तेत्यभिमानः सङ्गः स येषां तेषां कर्मसङ्गिनामतत्त्वविदां मूढानां स्वयं पण्डितत्त्वाभिमानेन बुद्धिभेदं ज्योतिष्टोमेन स्वर्गकाम इति वचनाज्ज्योतिष्टोमं कृत्वा स्वर्गफलं भोक्ष्य इत्यादि फलविषया या कामना बुद्धिस्तस्याः भेदं चालनं न जनयेत् न कर्माणि कामनया कर्तव्यानीति वा स्वर्गादिफलमसदिति कर्मादि सर्वं मिथ्येति वा तेषां बुद्धेर्वैकल्यं न सम्पादयेत्किन्तु अक्षय्यं ह वै चातुर्मास्ययाजिन इति पश्यति पुत्रं पश्यति पौत्रमिति तस्माद्धर्मं वदन्तीत्यादिना च सर्वाणि वैदिकानि जोषयेत् प्रीणयेत्कर्मफलस्तुत्या कर्माणि कर्तुमिच्छामेव सम्पादयेदित्यर्थः ।

अन्ये तु इदं द्वयमित्थं योजयन्ति तदेवमीश्वरस्य कृतार्थतया कर्माकरणे तदनुवर्तिनामपि तदकरणादेव स्थितिहेतुत्वभावात्पृथिव्यादिभूतानां विनाशप्रसङ्गाद्वर्णाश्रमधर्मव्यवस्थानुपपत्तेश्चाधिकृतानां प्राणिनां पापापहतत्वप्रसङ्गात्परानुग्रहार्थमीश्वरस्य कर्मणि प्रवृत्तिरित्युक्तम् । सम्प्रति तवेश्वरस्य लोकसङ्ग्रहार्थं कर्माणि कुर्वाणस्यापि कर्तृत्वाभिमानाभावान्न कापि क्षतिर्मादृशस्य तु जीवस्य लोकसङ्ग्रहार्थं कर्माणि कुर्वाणस्य कर्तृत्वाभिमानेन ज्ञानाभिभवः स्यादित्याशङ्क्याह सक्ता इति । हे भारत कर्मण्यासक्ताः कर्तृत्वाभिमानेन फलाभिसन्धिना च कर्मण्यभिनिविष्टा अविद्वांसोऽज्ञा यथा कुर्वन्ति तथा लोकसङ्ग्रहं कर्तुमिच्छुर्विद्वानात्मविदपि कुर्यात् किन्त्वसक्तः कर्तृत्वाभिमानं फलाभिसन्धिञ्चाकुर्वन्नित्यर्थः तथा च यथाऽहं कृतार्थोऽपि सन् लोकसङ्ग्रहार्थं कर्म करोमि तथा त्वमन्यो वा विद्वांस्तदर्थं कर्म कुर्यादिति भावः । तव तु भरतवंशोद्भूतत्वादपि लोकसङ्ग्रहोऽवश्यं सम्पाद्य इति सूचनाय सम्बोधनं । भा ज्ञानम् तस्यां रतत्वेन यथोक्तशास्त्रार्थबोधयोग्योऽसीत्यपरे ॥ २५ ॥

ननु कर्मानुष्ठानेनैव लोकसङ्ग्रहः कर्तव्यो न तु तत्त्वज्ञानोपदेशेनेत्यत्र को हेतुरित्यत्राह नेति । अज्ञानामविवेकिनां कर्मसङ्गिनां कर्तृत्वाभिमानफलाभिसन्धिभ्यां कर्मण्यभिनिविष्टानां बुद्धेरहमेतत्कर्म करिष्ये एत-

त्फलं च भोक्ष्य इत्येवं रूपायाः भेदं विवाचनं न जनयेदकर्त्रात्मोपदेशेन न कुर्यात् किन्तु युक्तः सावधानः सन् विद्वान् लोकसङ्ग्रहं चिकीर्षुः सर्वकर्माणि समाचरन् तेषां श्रद्धामुत्पाद्य जोषयेत् प्रीत्या सेवयेत् अनधिकारिणामकर्त्रात्मोपदेशेन बुद्धिविचालने कृते तु कर्मसु श्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेरुभयभ्रष्टत्वं स्यात्।

अज्ञस्यार्द्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्।
महानिरयजालेषु स तेन विनियोजितः

इतिस्मृतेः॥ २६॥

विद्वदविदुषोः कर्मानुष्ठानसाम्येपि कर्तृत्वाभिमानतदभावाभ्यां विशेषं दर्शयन् सक्ताः कर्मणीति श्लोकार्थं स्पष्टयति प्रकृतेरित्यादिद्वाभ्याम्—

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।**
**अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते॥ २७॥**

प्रकृतेः सत्त्वरजस्तमोगुणात्मिकायाः मूलप्रकृतेरीश्वरशक्तेर्गुणैर्विकारैः कार्यकरणरूपैः क्रियमाणानि लौकिकवैदिकानि कर्माणि सर्वशः सर्वप्रकारैः कार्यकरणसङ्घातेऽहम्प्रत्ययोऽहङ्कारः स्तेन विमूढः स्वरूपविवेकासमर्थ आत्मा चित्तं यस्य सोऽहङ्कारविमूढात्माऽनात्मन्यात्माभिमानी कर्ताहमिति करोम्यहमिति मन्यते कर्त्रध्यासेनानात्मधर्माण्यात्मन्यारोपयतीत्यर्थः।

मूढानामेव कर्म न तु पण्डितानामिति सूचयितुमज्ञानां कर्मसङ्गिनामिति यदुक्तं तदेव विस्पष्टयति प्रकृतेरिति। प्रकृतिर्माया सत्त्वादिगुणद्वाराऽऽकाशादिमहाभूतरूपेण परिणता तस्याः प्रकृतेर्गुणाः कार्यभूता देहेन्द्रियादयस्तैरेव न कांचिदप्यात्मना क्रियमाणानि सर्वाणि कर्माणि प्रत्यविद्वानहङ्कारविमूढात्मा स्वाविद्यया देहेन्द्रियादावनात्मन्यहमितिबुद्धिरहङ्कारस्तेन विमूढो विपरीतग्रहणपर आत्मा मनो यस्य सोऽहङ्कारविमूढात्मा, यद्वा विमूढ इत्यत्रान्तर्भवित णिच् देहेन्द्रियादिष्वहङ्करणेन हि मोहितः द्रष्टाऽहं स्प्रष्टाहं श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता भोक्तेति तत्तदुपाधिसम्बन्धसम्भावितविपरीतवृत्तीनां विषयतां गमित आत्मा प्रत्यग्रूपो येन सोऽहङ्कारविमूढात्मा, यद्वा देहेन्द्रियादिष्वहङ्करणेन विमोहितोहम्प्रत्ययेऽर्थस्तेनाविहित आत्मा येन सोहङ्कारविमूढात्मा कर्ताहमिति मन्यते दुष्टादुष्टप्रारब्धवशाद्देहेन्द्रियैः कृतेषु दुष्टेष्वदुष्टेष्वपि कर्मस्वकर्त्तारमेवात्मानं मया पापं कृतं पुण्यं कृतमिति तत्तत्क्रियायाः कर्तारमेव पश्यतीत्यर्थ इत्यन्ये॥ २७॥

विद्वांस्तु न तथा मन्यत इत्याह—

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**

**गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

तत्त्वविदिति । तुशब्दोऽज्ञाद्वैलक्षण्यद्योतनार्थः हे महाबाहो गुणकर्मभ्यो विभागौ गुणकर्मविभागौ तयोर्गुणविभागस्य कर्मविभागस्य च तत्त्ववित् नाहं कार्यकरणसङ्घातात्मेति गुणेभ्य आत्मनो विभागः न मे कर्माणीति कर्मभ्य आत्मनो विभागः गुणकर्मभ्यां विभक्तात्मतत्त्वसाक्षात्कारवानित्यर्थः विभागपदबलादयमर्थो लभ्यते विग्रहस्तु विभागश्च विभागश्च विभागाविति एकशेषः गुणकर्मभ्यो विभागौ गुणकर्मविभागौ तयोरिति बोध्यः । गुणाः करणात्मका गुणेषु विषयेषु प्रवर्तन्ते विकारित्वात् न तु निर्विकार आत्मेति मत्वा न सज्जते सक्तिं कर्तृत्वाभिनिवेशमतत्त्वविदिव न करोतीत्यर्थः तथा च नायं विद्वानहङ्कारविमूढात्मा नापि कर्मण्यासक्तो येनाहं कर्तेति मन्येतेतिभावः महान्तौ बाहू शत्रुहनने प्रवर्तेतेऽतस्त्वमपि कर्तृत्वाभिनिवेशलक्षणं शत्रुं हन्तुमर्हसीति सम्बोधनाशयः ।

तत्त्वं याथातथ्यं वेत्तीति तत्त्ववित् कस्येत्यत आह गुणकर्मविभागयोः गुणा देहेन्द्रियान्तःकरणानि कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानीति गुणकर्मेति द्वन्द्वैकवद्भावः विभज्यते सर्वेषां जडानां भासकत्वेन पृथग्भवतीति विभागः स्वप्रकाशज्ञानरूपोऽसङ्ग आत्मा गुणकर्म च विभागश्चेति द्वन्द्वः तयोर्गुणकर्मविभागयोर्भास्यभासकयोर्जडचैतन्ययोस्तत्त्वं याथात्म्यं यो वेत्ति स गुणा गुणेषु प्रवर्त्तन्ते न त्वात्मेति मत्वा न सज्जते सक्तिं न करोति सामुद्रकोक्तसत्पुरुषलक्षणयोगित्वान्न पृथग्जनसाधारण्येन त्वमविवेकी भवितुमर्हसीति सूचनाय महाबाहो इत्यपरे ।

यस्तत्त्ववित् आत्मनस्तत्त्वं याथात्म्यं गुणातीतत्वादिलक्षणं विद्वान् सः गुणाश्चक्षुरादयः गुणेषु रूपादिविषयेषु वर्तन्ते इति मत्वा गुणकर्मविभागयोर्गुणानां सत्त्वरजस्तमसां विभागे अहङ्कारदेहेन्द्रियविषयरूपेण विभज्यावस्थाने न सज्जते इदमहमिति न मन्यते तथा कर्मणामहङ्कारादिव्यापाराणामभिमानादीनां विभागे न सज्जते एतं ममेति न मन्यते इत्यन्ये ॥ २८ ॥

एवं विद्वदविद्वत्स्वरूपं प्रकृतमुपपाद्य विद्वानविदुषो बुद्धिभेदनं न कुर्यादित्युपसंहरति—

**प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥२९॥**

प्रकृतेरिति । प्रकृतेः मायाशक्तेर्गुणैर्विकारैर्देहेन्द्रियादिरूपैः सम्यक् मूढाः स्वस्वरूपास्फुरणेन तानेवात्मत्वेन मन्यमानास्तेषामेव गुणानां देहेन्द्रियान्तःकरणानां कर्मसु व्यापारेषु सज्जन्ते वयं कर्म कुर्मः फलायेति दृढतरामात्मीयबुद्धिं कुर्वन्ति ये तान्कर्मसङ्गिनोऽतएवाकृत्स्नविद आत्मज्ञानशून्यान् कर्मफलमात्रदर्शिनो यतो मन्दान् मन्दप्रज्ञानशुद्धचित्तत्वेन ज्ञानाधिकारमप्राप्तान् कृत्स्नवित् परिपूर्णात्मवित् आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमिति श्रुत्यात्मविदः कृत्स्नवित्त्वोक्तेर्न विचालयेत् तद्बुद्धिभेदनं न कुर्यादित्यर्थः ये त्वमन्दाः शुद्धान्तःकरणास्ते स्वयमेव विवेकोदयेन तद्विचलनेन ज्ञानाधिकारम्प्रापयिष्यन्तीत्याशयः ॥२९॥

अन्ये त्विदं द्वयमित्थं योजयन्ति । विद्वान् युक्त इति यदुक्तमात्मनो देहेन्द्रियतत्कर्मसम्बन्धाभावदर्शनं विदुषस्तदनेन प्रतिपाद्यते तत्त्ववित्त्विति । गुणकर्मविभागयोः गुणाश्चक्षुरादयो वागादयो बुद्धिर्मनश्च तत्र चक्षुःश्रोत्रादीनामेव दर्शनश्रवणादिक्रिया नत्वात्मनो वाक्पाण्यादीनामेव वचनादानादिक्रिया बुद्धेरेवाहङ्करणक्रिया मनस एव सङ्कल्पनक्रिया आत्मनस्तु कूटस्थासङ्गसच्चिदानन्दरूपेणावस्थानमात्रमेवं गुणविभागः कर्मविभागश्च तयोर्गुणकर्मविभागयोरात्मनश्च तत्त्वं याथात्म्यं वेत्तीति तत्त्वविद्विद्वान् तुशब्दोऽविद्वद्व्यावृत्त्यर्थः सर्वकर्मसु गुणाश्चक्षुरादय एव गुणेषु रूपादिषु वर्तन्ते वागादय एव वचनादिषु वर्तन्ते बुद्धिरेव तेषां कर्मस्वहं कर्तेत्यहङ्करोति अहन्तु न शृणोमि न पश्यामि न वदामि न करोमि न गच्छामि किन्तु कूटस्थासङ्गसच्चिदानन्दात्मना सर्वदा तूष्णीमेवासामिति मत्वा निश्चित्य तेषां कर्मसु न सज्जते तत्राह ममेति प्रत्ययं न करोतीत्यर्थः । तदुक्तम्—

धूलिधूमाम्बुदैर्यद्वन्मलिनीक्रियते नभः ।
परामृष्टस्तथैवात्मा विशुद्धः प्रावृतैर्गुणैः ॥ इति ।

एवं देहेन्द्रियादिभिः क्रियमाणेषु कर्मसु स्वस्याकर्तृत्वदृष्ट्या विद्वान् स्वाविलक्षणानज्ञान् कर्मिणः प्रमादेनापि न विचालयेदिति पुनरुक्तमेवार्थं दृढयति कर्मिणां विद्वद्वैलक्षण्यं दर्शयन् प्रकृतेर्गुणसम्मूढाइति । प्रकृतेरुक्तलक्षणाया गुणेषु कार्येषु देहेन्द्रियादिष्वहम्बुद्ध्या सम्मूढास्तदात्मतामापन्नाः पामरा जनाः स्वयं गुणकर्मसु गुणैः श्रोत्रादिभिर्वागादिभिश्च क्रियमाणे कर्मसु

श्रवणदर्शनस्पर्शनरसनघ्राणनवचनादानगमनविसर्गानन्दभोजनादिष्वहमेव श्रोता द्रष्टा स्प्रष्टा रसयिता घ्राता वक्ता दाता गन्ता विसर्जयिता नन्दयिता कर्ता भोक्तेति सज्जन्तेऽभिनिवेशं कुर्वन्ति तान् कर्मिणोऽकृत्स्नविदोऽब्रह्मविदोऽज्ञान् कृत्स्नवित् पूर्वोक्तलक्षणो ब्रह्मविन्न विचालयेत् न कामनया कर्म कर्तव्यमिति वा स्वर्गादिकर्मफलमसदिति वा कर्त्रादि मिथ्येति वा त्वं ब्रह्मैव तव न किञ्चित्कर्तव्यमस्तीति वा न विक्षेपयेत्किन्तु कर्मस्तुत्या कर्मस्वेव प्रवर्तयेदित्यर्थः ॥ २९ ॥

एवं ज्ञानिनामप्यधिकारिणां लोकसङ्ग्रहार्थमवश्यं कर्म कर्तव्यमिति लोकसङ्ग्रहकारिणेत्येवं वर्तितव्यमिति चोपदिश्याधुना लोकसङ्ग्रहदृष्ट्यापि स्वधर्मं कुर्वित्याह—

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**

**निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः ॥ ३० ॥**

मयीति । लोकसङ्ग्रहकर्तात्मतत्त्वज्ञस्त्वमध्यात्मचेतसा सर्वं यदयमात्मेति श्रुत्युक्तरीत्याऽऽत्मानमधिकृत्य प्रवृत्तमध्यात्मं चेतो ज्ञानमध्यात्मञ्च तच्चेतश्च तेनाध्यात्मचेतसा ब्रह्मार्पणमब्रह्महविरिति वक्ष्यमाणलक्षणया प्रत्यग्दृष्ट्या सर्वं ब्रह्मैवेति दर्शनेन कर्माणि नित्यनैमित्तिकादीनि सर्वाणि मयि सर्वात्मनि ब्रह्मणि संन्यस्य सर्वं ब्रह्मैवेति प्रविलाप्य जयेन प्राप्ते राज्ये युद्धक्रियाफले निराशीर्निरपेक्षः सन् वध्यमानेषु भ्रात्रादिषु निर्ममो ममतारहितो भूत्वा एते मदीया मया हन्यन्ते इति यो ज्वरः सन्तापः स विगतो यस्य स विगतज्वरो निश्शोको भूत्वा युध्यस्व लोकसङ्ग्रहार्थं कर्म कुर्वित्यर्थः । अत्रायमाशयः सर्वमिदमहञ्च ब्रह्मैवेति परावरैकत्वविषयकाप्रतिबद्धापरोक्षज्ञानवानधिकारिको ब्रह्मविदत्रोक्तरीत्या लोकहितार्थं कर्म कुर्यादस्य जीवत एव मुक्तत्वात्परतारणमेव प्रयोजनं, परोक्षज्ञानी चेदात्मा देहादिभिन्नस्तद्द्रष्टृत्वात् घटद्रष्टृवदिति स्वदेहादिभिन्नत्वज्ञानेन यौक्तिकेन नाहं कर्ता कारयितेत्यकर्तृत्वबुद्ध्या मायामात्रमिदं द्वैतमित्यादिश्रुतिबलेनेदं सर्वं मिथ्या मायाकार्यत्वादैन्द्रजालिकवदित्यादियुक्तिबलेन च कर्ता कार्यं करणं च सर्वं मिथ्यैवेति कर्त्रादेः सर्वस्य मिथ्यात्वमेव पश्यन् सर्वत्र निराशो निर्ममो भूत्वा लोकहितार्थं कर्म कुर्यात्तेन चित्तपरिपाको ज्ञानं मोक्षश्च सिध्यति लोकोपकारश्चास्य तरणं तारणं चोभयमप्युपपद्यते अनात्मज्ञश्चेत्परिग्रहं ममताराहितः कर्मफलानपेक्षश्च भूत्वा श्रौतानि स्मार्तानि च सर्वाणि कर्मा-

णीश्वरार्पणबुद्ध्या स्वार्थमेव कुर्यात्तेन चितशुद्धिस्तया ज्ञानं मोक्षश्चास्य सिद्ध्यतीति ॥ ३० ॥

न कर्मणामनारम्भादित्यारभ्य मयि सर्वाणि कर्माणीत्यन्तेन ग्रन्थेन मुमुक्षोरवश्यं मोक्षार्थमीश्वरार्पणबुद्ध्या कर्म कर्तव्यमिदम्मम मतमिति निश्चित्य श्रीकृष्णो ये मम मतानुसारिणस्ते मुक्ता भविष्यन्ति ये तु विपरीतकारिणस्ते विनङ्क्ष्यन्तीति नियमयति—

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥**

ये विवेकिनो मानवा ब्राह्मणादयो मुमुक्षव इदमुक्तलक्षणं मे ममेश्वरस्य मतं शासनमनसूयन्तोऽसूया नाम गुणदूषणा जगद्गुरौ मयि तामकुर्वन्तः किन्तु श्रद्धावन्तस्तत्र श्रद्धाम्भाक्तिञ्च कुर्वन्तः सन्तोऽनुतिष्ठन्त्यनुवर्तन्ते मच्छासनमनुल्लङ्घ्य ये नित्यं कर्म कुर्वन्तीत्यर्थः ते सत्त्वशुद्ध्या शुद्धात्मविज्ञानं प्राप्य कर्मभिः पुण्यापुण्यलक्षणैर्नानादुःखहेतुभिः संचितादिभिर्मुच्यन्ते अपिशब्दाज्जन्मादिभिश्च मुक्ता भवन्तीत्यर्थः ।

अन्येतु इदं द्वयमित्थं योजयन्ति । एवं कर्मानुष्ठानसाम्येऽप्यज्ञविज्ञयोः कर्तृत्वाभिनिवेशतदभावाभ्यां विशेष उक्त इदानीमज्ञस्यापि मुमुक्षोरमुमुक्षवपेक्षया कर्मणां भगवदर्पणं फलाभिसन्ध्यभावं च विशेषं वदन्नर्जुनस्याप्यज्ञतया कर्माधिकारमेव दृढयति मयीति । मयि भगवति वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि लौकिकानि वैदिकानि च कर्माणि आध्यात्मचेतसाहङ्कर्तान्तर्याम्यधीनस्तस्मा एवेश्वराय राज्ञ इव भृत्यः कर्माणि करोमि न त्वन्यस्मै स्वतन्त्रो वेत्यनया बुद्ध्या सन्न्यस्य समर्प्य, दर्शितरीत्या कर्मसु प्रवृत्तस्य कर्तव्यान्तरमाह निराशीर्निष्कामः निर्ममो देहपुत्रभ्रात्रादिषु ममताशून्यः विगतज्वरः विगतो ज्वरः सन्तापहेतुः शोको यस्मात्स ऐहिकपारत्रिकदुर्यशोनरकपातादिनिमित्तशोकरहितश्च भूत्वा त्वं मुमुक्षुर्युद्ध्यस्व विहितानि कर्माणि कुर्वित्यभिप्रायः अत्र भगवदर्पणं निष्कामत्वञ्च सर्वकर्मसाधारणं मुमुक्षोः निर्ममत्वं त्यक्तशोकत्वञ्च प्रकृतयुद्धाभिप्रायमिति बोध्यम् ॥ ३० ॥

फलाभिसन्धित्यागेन भगवदर्पणबुद्ध्या विहितकर्मानुष्ठानं सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण मुक्तिफलमित्याह ये मे इति । ये मानवा मनुष्याः श्रद्धावन्तः शास्त्राचार्योपदिष्टेऽर्थेऽननुभूतेप्येवमेवैतदिति विश्वासवन्तोऽनसू-

यन्तः गुणेषु दोषाविष्करणमसूया नामकुर्वन्तः प्रकृते तु दुःखात्मके कर्मणि मां प्रवर्तयन्नकृपालुरयं भगवानित्येवंरूपां प्रसक्तामसूयां मयि सर्वगुरौ सर्वसुहृद्यकुर्वन्तो मे ममेदं फलाभिसन्धित्यागेन विहितकर्मानुष्ठानरूपं मतं नित्यं नित्यवेदबोधितत्वेनानादिपरम्परागतमावश्यकं सर्वदेति वाऽनुतिष्ठन्त्यनुवर्तन्ते तेऽपि चित्तशुद्धिज्ञानप्राप्तिद्वारेण सम्यग्ज्ञानिवद्धर्माख्यैः कर्मभिर्मुच्यन्ते मुक्ता भवन्तीत्यर्थः ॥ ३१ ॥

एवं भगवन्मतानुवर्तिनां गुणमुक्त्वा तदननुवर्तने दोषमाह—

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥**

ये त्विति । ये तु पूर्वोक्तविपरीता श्रद्धाहीनाः अभ्यसूयन्तो मयि दोषमुद्भावयन्तः एतन्मे मम मतं नानुवर्तन्ते तानचेतसोऽविवेकिनो दुष्टचित्तान् अतएव सर्वज्ञानविमूढान् सर्वत्र कर्मणि सगुणे निर्गुणे च ब्रह्मणि यज्ज्ञानं तत्र विविधं प्रमाणतः प्रमेयतः प्रयोजनतश्च मूढांस्तज्ज्ञानायोग्यान्नष्टान्सर्वपुरुषार्थभ्रष्टान्विद्धि जानीहीत्यर्थः ।

विपक्षे दण्डमाह ये त्वविवेकिनो ब्राह्मणादयो दुरहङ्कारा एतदुक्तम् ममेश्वरस्य मतं शासनमभ्यसूयन्तोऽत्यन्तं दूषयन्तः सन्तो नानुतिष्ठन्ति दुराग्रहेण मदाज्ञां न कुर्वते सर्वज्ञानविमूढान्सर्वात्मकत्वात्सर्वं ब्रह्म तद्विषयकं ज्ञानं सर्वज्ञानं तस्मिन्विषये विशिष्य मूढांस्तान् सर्वज्ञानविमूढान् विचेतसोऽविवेकिनः कर्म बहुसाधनसाध्यं क्लेशभूयिष्ठमदृष्टफलं चातस्तत्संन्यास एव परमसुखमित्येवं विपरीतबुद्धयस्तान्संन्यासानर्हानकर्मनिष्ठान् जनान्नष्टान् विनष्टपुण्यलोकान् विद्धि स्वधर्मं परित्यज्य परधर्मे वर्तमानाः स्वयमेव विनश्येयुरित्यर्थ इत्यन्ये ॥ ३२ ॥

ननु कस्मात्पुनः कारणात्त्वदाज्ञातिक्रमदोषादबिभ्यन्तस्त्वन्मतं स्वधर्मं नानुवर्तन्ते निषिद्धञ्च परधर्ममनुतिष्ठन्तीति चेत्तत्राह—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किङ्करिष्यति ॥ ३३ ॥**

सदृशमिति । ज्ञानवानपि ब्रह्मवित् गुणदोषज्ञानवान्वा स्वस्याः स्वकीयायाः प्रकृतेः पूर्वकृतधर्माधर्मज्ञानेच्छादिसंस्कारभूतायाः 'तं विद्याकर्मणी समन्वारेभेते पूर्वप्रज्ञा चेति' श्रुतिप्रमाणिकायाः सदृशमनुरूपं चेष्टते चेष्टां करोति

किम्पुनर्मूर्ख इत्यर्थः । ज्ञानवतामज्ञानवताञ्च प्रकृत्यधीनत्वाविशेषे फलितमाह प्रकृतिमिति । भूतानि सर्वेपि प्राणिनः पुरुषार्थभ्रंशहेतुभूतामपि प्रकृतिं यान्ति तत्सदृशीं चेष्टां गच्छन्त्यनिच्छन्तोपीत्यर्थः तत्र मम वा राज्ञो वा निग्रहः किङ्करिष्यति रागप्राबल्यान्न दुरितं निवर्त्तयितुं शक्नोतीत्यर्थः महानरकसाधनत्वं ज्ञात्वापि दुर्वासनाप्राबल्यात्पापेषु प्रवर्तमाना न मदाज्ञातिक्रमदोषाद्बिभ्यतीति भावः । मम मतमनादृत्य कर्त्तव्यं कर्म संन्यस्य स्थाणुवत्तूष्णीमास्महे इति ये तु मन्यन्ते तेषां प्रकृत्यधीनानाञ्चलित्वा-तूष्णीमासनं न घटते ज्ञानिनामप्यजेयायाः प्रकृतेर्मम मायायाः निग्रहस्यातिदुष्करत्वादिति ।

कार्यते ह्यवशः कर्मेति वचनार्थमेव पुनर्दृढयति । यूनां कर्मणि नियमनार्थं ज्ञानवानपि निरन्तरब्रह्मनिष्ठानिर्मूलितसर्ववासनाग्रन्थिरपि ब्रह्मवित्प्राणत्राणहेतुतयाऽविशिष्टायाः स्वस्याः प्रकृतेर्वाम्ननायाः सदृशमनुरूपमेवाहारादौ चेष्टते तां निग्रहीतुं न शक्नोति शरीरस्थितिहेतोः प्रकृतेर्दुर्निवारत्वादेवं ब्रह्मनिष्ठया प्रकृतिमतीत्य तिष्ठतो जितेन्द्रियस्य ब्रह्मविदोऽपि प्रकृत्यनुवर्तित्वे सत्यन्राशिष्टानां मूढानाङ्किमु वक्तव्यमित्याशयेनाह प्रकृतिमिति । सुखदुःखयोरनुभूत्यै स्वस्वकर्मणा भवन्तीति भूतानि सर्वे प्राणिन स्वस्वजात्यनुरूपेण नानाक्रियाहेतुभूतां प्रकृतिं रागद्वेषादिगुणवतीं वासनात्मिकां यान्ति स्वस्वप्रकृत्यनुरूपेण रागद्वेषाभ्यां नानारूपं चेष्टन्त एव न प्रकृत्यधीनास्तूष्णीं स्थातुं क्षणमपि शक्नुवन्ति अतो वयं न किञ्चित्कुर्म इति निग्रहस्तात्कालिकेन्द्रियानिरोधः किङ्करिष्यति रागादिदोषवत्स्वकीयप्रकृतिवेगेन सर्वस्यापि चेष्टितव्ये सति नाहं किञ्चित्करोमीति नियमो व्यर्थ इत्यन्ये ॥ ३३ ॥

ननु सर्वस्य प्राणिजातस्य प्रकृतिवशवर्तित्वे लौकिकवैदिकपुरुषप्रयत्नविषयाभावाद्विधिनिषेधशास्त्रानर्थक्यं प्राप्तं न च प्रकृतिशून्यः कश्चिदस्ति यं प्रति तदर्थवत्त्वं स्यादित्यत आह—

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्यार्थे सर्वेषामिन्द्रियाणामर्थे शब्दादिविषये वचनादौ च अनुकूले निषिद्धेपि रागः प्रातिकूले विहितेऽपि द्वेषः इत्येवं प्रतीन्द्रियार्थं रागद्वेषौ व्यवस्थितावानुकूल्यप्रातिकूल्यव्यवस्थया स्थितौ

न त्वनियमेन तौ सर्वत्र भवतस्तत्र पुरुषकारस्य शास्त्रस्य चायं विषयो यत्तयोर्वशं नागच्छेदिति तयोः रागद्वेषयोर्वशं नागच्छेत्तदधीनो न प्रवर्तेत न निवर्तेत वा किन्तु पूर्वमेव शास्त्रीयतद्विरोधिविवेकज्ञानेन तत्कारणमिथ्याज्ञाननाशद्वारा तौ नाशयेत् हि यस्मात् तौ रागद्वेषौ स्वाभाविकदोषप्रयुक्तौ अस्य पुरुषस्य श्रेयोऽर्थिनः परिपन्थिनौ शत्रू श्रेयोमार्गस्य विघ्नकर्तारौ दस्यू इव पथिकस्येत्यर्थः । अयं भावः या हि पुरुषस्य प्रकृतिः सा बलवदनिष्टसाधनत्वज्ञानाभावसहकृता सत्यापाततात्कालिकेष्टसाधनत्वज्ञाननिबन्धनं रागं पुरस्कृत्यैव शास्त्रनिषिद्धे परस्त्रीगमनादौ पुरुषं प्रवर्तयति तथा बलवदिष्टसाधनत्वज्ञानाभावसहकृतापाततात्कालिकानिष्टसाधनत्वज्ञाननिबन्धनं द्वेषं पुरस्कृत्यैव शास्त्रविहितादपि सन्ध्यावन्दनादेर्निवर्तयति तत्र शास्त्रेण पूर्वमेव निषिद्धस्य बलवदनिष्टसाधनत्वे ज्ञापिते सहकार्यभावात्केवलं दृष्टेष्टसाधनत्वज्ञानं मधुविषमिलितान्नभोजन इव तत्र न रागं जनयितुं शक्नोति एवं शास्त्रेण विहितस्य बलवदिष्टसाधनत्वे बोधिते सहकार्यभावात्केवलं दृष्टानिष्टसाधनत्वज्ञानं भोजनादाविव तत्र न द्वेषं जनयितुं शक्नोति ततश्चाप्रतिबद्धं शास्त्रं विहिते पुरुषं प्रवर्तयति निषिद्धाच्च निवर्तयतीति शास्त्रीयविवेकविज्ञानप्राबल्येन स्वाभाविकरागद्वेषयोः कारणोपमर्दनेनोपमर्दान्न प्रकृतिर्विपरीतमार्गे शास्त्रदृष्टिं पुरुषं प्रवर्तयितुं शक्नोतीति न शास्त्रस्य पुरुषप्रयत्नस्य च वैयर्थ्यं नापि स्वधर्मं त्यक्त्वा परधर्मे प्रवृत्तिर्भवति शास्त्रीयदृष्टेस्तत्प्रतिबन्धकत्वादिति । अयमेवार्थो नवीनैः प्रकारान्तरेणोक्तः तथाहि प्रथमं हीन्द्रियार्थसन्निकर्षे पदार्थज्ञानं ततो मिथ्याज्ञानवशात्तत्र रागादिः प्रकृतिश्च रागादिपुरस्सरैव पुरुषं इष्टानिष्टयोर्विहितप्रतिषिद्धयोः प्रवर्तयति तदा निषिद्धाचरणं विहितपरित्यागश्च सम्पद्यते यदा पुनः शास्त्रदृष्ट्या पूर्वमेव यथावद्वस्तु प्रतिभाति तदा मिथ्याज्ञाननिवृत्त्या रागादिर्निवर्तते सहकारिरागादिनिवृत्त्या च प्रकृतिः प्रवर्तयितुं न शक्नोति तस्माच्छास्त्रानुसारिपुरुषप्रयत्नेन प्रवृत्तेः पूर्वमेव रागद्वेषौ निवर्तनीयौ तयोरेवानर्थहेतुत्वादिति ।

अन्ये तु ननु सर्वस्यापि प्राणिजातस्य रागद्वेषात्मिकया प्रकृत्या ग्रस्तत्वे त्वन्मतानुसारिणामप्युक्तलक्षणप्रकृतिग्रस्तत्वात्त्वदुक्ते कर्मयोगे कथं तेषां प्रवृत्तिर्घटतेत्याकाङ्क्षायां रागद्वेषयोः समीचीनत्वासमीचीनत्वबुद्धिमूलकत्वात् 'न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते' इतिन्यायेनेश्वराराधनात्मके विध्युक्ते कर्तव्ये कर्मणि कुशलत्वाकुशलत्वबुद्धिपरित्यागे रागद्वेषयोरनव-

काश इति सूचयितुं रागद्वेषयोः स्थितितन्निवृत्तिप्रकारं तयोर्बन्धकत्वञ्चाह इन्द्रियस्येन्द्रियस्यार्थे सर्वेषामिन्द्रियादीनां श्रोत्रादीनामर्थे शब्दादिरूपे रागद्वेषौ व्यवस्थितौ इष्टे रागोऽनिष्टे द्वेष इत्येवं प्रतिविषयं नियमेन स्थितौ भवतः। इन्द्रियाणां विषयेषु रागो वा द्वेषो वाऽस्तु मुमुक्षोस्तेन तु का हानिरित्यत आह तौ हीति । हि यस्मात्कारणात्तौ रागद्वेषावस्य धर्मचिकीर्षोर्मोक्षमार्गस्य परिपन्थिनौ पथि चोराविव प्रतिबन्धकौ मुमुक्षुं मोक्षसाधनमाश्रयन्तं स्वाश्रयबलेन विषयारण्ये पातयित्वा तदन्तरेव भ्रामयतः ततो मुमुक्षुः पुरुषः सदसद्विवेको भूत्वा विषये समीचीनत्वादिबुद्ध्या तयोरागद्वेषयोर्वशमधीनतां न गच्छेत् द्रव्ये गुणे कर्मणि वा समीचीनत्वबुद्धिं न कुर्यात् विषयेषु समीचीनत्वासमीचीनत्वबुद्धिकरणमेव तयोर्वशवर्तित्वहेतुस्तां मुमुक्षुरकुर्वन् रागद्वेषयोरविषयो भूत्वा स्वधर्मे कुशले वाऽकुशले वापीश्वरप्रीत्यै प्रवर्त्तेत एवं प्रवृत्तो निष्प्रत्यूहं मोक्षं प्राप्नोतीत्यर्थ इत्याहुः।

इन्द्रियस्य श्रोत्रादेरर्थे शब्दादिविषये इन्द्रियस्य मुख्येन्द्रियस्य मनसो धर्मौ रागद्वेषौ व्यवस्थितौ अवश्यं भाविनौ स्यातां स्वानुकूले विषये रागः प्रीतिः प्रतिकूले च द्वेषस्तथापि तयोर्वशं नागच्छेत् तद्वशवर्ती न भवेत् हि यस्मात्तौ रागद्वेषावस्य मुमुक्षोर्मनसः परिपन्थिनौ क्षोभकरत्वेन शत्रुवदुपस्थितौ न हि लोकेऽपि कश्चिदुपायदक्षो वैरिवशवर्ती भवति दुःखहेतौ प्रवृत्त्यभावात् । यद्यपि तौ प्रकृतिबलेन वशं नयतस्तथापि मदाश्रयबलेन शास्त्राचार्यबलेन च वशं न गच्छेदित्यर्थः । ननु तत्रापि पूर्वसंस्कारएव शरणमिति चेन्न वर्त्तमानसामग्रीं विना केवलसंस्कारस्याकिञ्चित्करत्वात् आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्य इत्यादिश्रुत्या तत्प्रतिबन्धकोपायस्य बोधितत्वाच्चेत्यके ॥ ३४ ॥

ननु अभयं सर्वभूतेभ्यो दत्वा नैष्कर्म्यमाचरेदिति स्मरणात्कर्मसंन्यासोपि धर्मः कर्त्तव्य एवेति चेत्, सत्यं संन्यासोऽपि शास्त्रीय एव धर्मः कर्तव्यश्च मुमुक्षोस्तथापि स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तित इति वचनादपक्वान्तःकरणस्य स धर्मो न भवति किन्तु बहुजन्मानुष्ठित पुण्यपुञ्जैः परिपक्वान्तःकरणस्य सर्वतो विरक्तस्य कर्मणां मोक्षसाधनत्वमपश्यत एव ममुक्षोर्विविदिषया कर्तव्यो धर्मः संन्यासः कृतार्थस्य वा विदुषः न तु मूढस्य कर्मस्वलसस्य दुःखबुद्ध्या ततोऽस्य संन्यासः परधर्म

एव न तु स्वधर्मः नापि च श्रेयोहेतुः किन्तु कर्मैव स्वधर्मः श्रेयोहेतुश्चानुष्ठेय इत्याह—

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

श्रेयानिति। वर्णाश्रमिणामयं परमोपदेशः क्रियते भगवता मम वचनं शृण्वन्तु मुमुक्षवः। स्वनुष्ठितात् यथाशास्त्रं सु सम्यङ्नियमेनानुष्ठितात् कृतात्परधर्माद्विगुणोऽपि व्यङ्गोऽप्यसम्यगनुष्ठितोऽपि स्वधर्मः स्वकीयः स्वस्य कर्तव्यत्वेन यः शास्त्रेण विहितः स एव स्वधर्मः पुरुषस्य श्रेयान् श्रेष्ठतरः विध्युक्तत्वात् यथा यतेः कर्मणः परधर्मत्वात्स्नानजपस्तोत्रादिकर्मापेक्षया ज्ञानसाधनश्रवणाद्येकप्रयोजनः सर्वकर्मसंन्यास एव श्रेष्ठो धर्मस्तथा कर्मसंन्यासस्य परधर्मत्वाद्गृहिणोऽपि सर्वकर्मसंन्यासापेक्षया ज्ञानसाधनसत्वशुद्ध्येकप्रयोजनः कर्मयोग एव श्रेष्ठो धर्मः। एवमेवेतरेषां वर्णाश्रमिणाञ्च परधर्मापेक्षया स्वधर्म एव श्रेयस्करो यथा वा लोके सौभाग्यादिगुणोपेताया परमातुः सकाशात्कुरूपापि स्वमाता पुत्राहितावहा भवति तथेत्यर्थः। किञ्च सुतरां परधर्मं परित्यज्य स्वल्पे व्यङ्गेऽपि वा स्वधर्मे नियमेन वर्तमानस्य निधनं मरणं श्रेयः श्रेयसे स्वर्गायापवर्गाय वा भवति न क्वचिदप्यश्रेयसे नरकाय स्वधर्मं तं परित्यज्य वागगोचरेऽपि परधर्मे वर्तमानस्य निधनं न क्वचिदपि श्रेयसे भवति किन्तु परधर्मो भयावहः नियमेन सम्यगनुष्ठितोऽपि परधर्मो भयं यमदूतेभ्यो नरकं वा वाहयति सम्पादयतीति भयावहः नरकगर्भवासादिदुःखप्रवाहहेतुरेव भवतीत्यर्थः।

अन्ये त्वित्थं योजयन्ति तथाहि ननु स्वाभाविकरागद्वेषप्रयुक्तपश्वादिसाधारणप्रवृत्तित्यागेन शास्त्रीयमेव कर्म कर्तव्यं चेत्तर्हि यत्सुकरं तदेव क्रियतां किमतिदुःखावहेन युद्धेनेत्यतआह श्रेयानिति। स्वधर्मः यं वर्णमाश्रमं प्रति वा यो विहितः स तस्य स्वधर्मः विगुणः सर्वाङ्गोपसंहारं विना कृतोऽपि परधर्मात् परं प्रति विहितात् स्वनुष्ठितात् सर्वाङ्गोपसंहारेण कृतादपि श्रेयान् श्रेष्ठतरः अतः स्वधर्मे किञ्चिदङ्गहीनेऽपि स्थितस्य निधनं मरणमपि श्रेयः श्रेष्ठतरं परधर्मस्थस्य जीवनादपि स्वधर्मस्थस्य निधनं हि इहलोके कीर्त्यावहं परलोके च स्वर्गादिप्रापकं परधर्मस्तु इहाकीर्तिकरत्वेन परत्र नरकप्रदत्वेन च भयावहः भयप्रापकोऽतो रागद्वेषादिप्रयुक्तस्वाभाविकप्रवृत्तिवत्परधर्मोऽपि हेय एवेत्यर्थः। अत्रायं सङ्ग्रहः—

अश्रद्धा ह्यनिस्तथासूया दुष्टचित्तत्वमूढते ।
प्रकृतेर्वशवर्तित्वं रागद्वेषौ च पुष्कलौ ।
परधर्मरुचित्त्वञ्चेत्युक्ता दुर्मार्गवाहकाः ॥

अन्ये तु ननु तत्तदिन्द्रियविषये स्थितयो रागद्वेषयोरात्मप्रापके आत्मधर्मे विघ्नकर्तृत्वेपीन्द्रियधर्मे प्रवृत्तिकरे विषयसुखजनके विघ्नकर्तृत्वाभावादिन्द्रियधर्म एवानुष्ठेयः किमात्मधर्मानुष्ठानेन विघ्नकर्तृयुक्तेनेति चेत्तत्राह श्रेयानिति । परेषामिन्द्रियाणां धर्माद्व्यापारात्प्रवृत्तिहेतुभूतात्स्वनुष्ठितात्सुगमेनानुष्ठातुं शक्यादपि स्वधर्म आत्मधर्म आत्मावगतिरूपः विगुणः प्राकृतगुणशून्यः श्रेयान् श्रेष्ठतरः मुक्तिहेतुत्वात्तत्र निधनं श्रेयः अपुनर्भवत्वात् परधर्मो भयावहः संसारपातहेतुत्वादित्याहुः ॥ ३५ ॥

ध्यायतो विषयान्पुंस इत्यादिना पूर्वमनर्थमूलमुक्तं साम्प्रतं च प्रकृतेर्गुणसम्मूढा इत्यादिना बहुविधं कथितं तत्र किं सर्वाण्यपि समप्राधान्येनानर्थकारणानि अथवैकं मुख्यकारणमितराणि तु तत्सहकारीणि केवलं? तत्राद्ये सर्वेषां पृथक्पृथङ्निवारणे महान्प्रयासः स्यात् द्वितीये त्वेकस्मिन्नेव निराकृते कृतकृत्यता स्यादित्यभिप्रेत्य विशेषेणानर्थमूलनिश्चयाय पृच्छति—

**अर्जुन उवाच ।**

**अथ केन प्रयुक्तोयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

अथ केनेति । हे वार्ष्णेय वृष्णिकुलोद्भव सर्वानर्थमूलं पापं कर्तुमनिच्छन्नप्ययं त्वन्मताननुवर्ती सर्वज्ञानविमूढः पुरुषः केन हेतुना प्रयुक्तः प्रेरितः पापं कर्म निषिद्धं विहितमपि काम्यं च कर्माचरति करोति न तु निवृत्तिलक्षणं परमपुरुषार्थसाधनभूतं त्वदुपदिष्टं कर्मेच्छन्नपि करोति अतो येन बलादिव नियोजितः प्रेरितः राज्ञेव भृत्यः सर्वानर्थमूलं कर्म जानन्नपि करोति तमनर्थमार्गप्रवर्तकं मां ब्रूहि ज्ञात्वा तदुच्छेदाय यतेयेत्यर्थः वार्ष्णेयीसुतोऽहं त्वद्बन्धुस्त्वया नोपेक्षणीय इति सूचनाय सम्बोधनं यथा त्वमजोऽपि केनचिदतिभक्तेन प्रेरितो वृष्णिकुलेऽवतीर्णोऽसि तथा प्रकृतेऽपीति द्योतनाय वार्ष्णेयेत्युक्तमित्यन्ये ।

यद्यपि ध्यायतो विषयानिति इन्द्रियस्येन्द्रियस्येति च पुरुषस्य जननमरणाद्यनर्थपरम्परागमनकारणं निरूपितं तथापि विशेषतस्तत्स्वरूपं

तदधिष्ठानं तज्जयोपायं च विज्ञातुकामोऽर्जुनः स्वयं विस्मृतवत्तदेव पृच्छति संसारकारणे विज्ञाते पण्डितैस्तदुपायेन परिहर्तुं शक्यत इत्यर्जुन उवाच अथेति। अथशब्दः पृथक्प्रश्नारम्भार्थः ब्रह्मविदां ब्रह्मानन्दामृतं वर्षतीति वृष्णिः सम्यग्बोधस्तेनावगम्यत इति वार्ष्णेयः परमात्मा श्री भगवान्वासुदेवस्तस्य सम्बुद्धिर्हे वार्ष्णेय बलवता राज्ञाऽवान्येन वा बलात्कारेण नियोजितः भृत्यइव कार्याकार्यज्ञोऽप्ययं पुरुषः स्वयं फलं पापसाध्यमनिच्छन्नपि केन प्रयुक्तोऽस्मिन्कार्यकरणसङ्घाते बलवता केन प्रेरितो भूत्वा पापमाचरत्ययुक्तमपि कर्म करोति तं ब्रूहीत्यर्थ इत्यपरे ॥ ३६ ॥

अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित्।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥

इति न्यायेन पुंसः सकलकर्माचरणकारणं सर्वानर्थबीजं काम एवेति बोधयितुं—

## श्रीभगवानुवाच ।

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

काम इति। सर्वेषां प्रवृत्तेः काममूलत्वात्कामः सर्वप्रत्यक्ष इत्याभिप्रेत्य एष इति पुरोनिर्देशः योग्यत्वायोग्यत्वविचारमन्तरेण वस्तु दृष्टं श्रुतं च कामयति पुमांसमिति कामो वैषयिकी प्रबलेच्छात्र कामशब्देनोच्यते एषः कामः यः पुंसः संसारकारणं स एष काम एव केनाचित्स्वविषये प्रतिबद्धः क्रोधात्मना परिणमते ततो क्रोधोऽप्येष काम एव स्वयं रजोगुणसमुद्भवः रजसः गुणो रागो रञ्जनात्मिका वैषयिकी सामान्येच्छा स एव विषयसन्निधाने काममुद्भावयतीति कामो रजोगुणसमुद्भवः । यद्वा—

प्रज्ञां तु सात्त्विकीं प्राहुस्तामसीन्तु विचित्तताम् ।
क्रियां तु राजसीं प्राहुर्गुणतत्त्वविदो बुधाः ॥

इतिवचनात् क्रिया रजोगुणस्तस्य समुद्भवो यस्मात्स रजोगुणसमुद्भवः काम एव प्रवृत्तिहेतुरित्यर्थः। न जातु कामः कामानामुपभोगेन शाम्यतीतिवचनान्महदियत्ताशून्यमशनमुपभोगलक्षणं यस्य स महाशनः सर्वदा तृप्तिरहित इत्यर्थः। तत एव महापाप्मा महान् पाप्मा दोषो यस्मात्पुरुषस्यायाति स महापाप्मा यतः कामाविष्टः स्वसारमप्यारोढुमिच्छति

चण्डालादप्यर्थं गृह्णाति क्रुद्धो गुरुमप्याक्रोशति गामपि च हन्त्यतः कामस्य युक्तं महापाप्मत्वमित्यर्थः तस्मात्त्वमिह संसार एनं काममेव मुमुक्षोर्वैरिणं विद्धि मुक्तिप्रतिबन्धकमेतमेव विजानीहीत्यर्थः।

अपरे तु यदा विवेकिनोपि पुरुषस्य सत्त्वगुणः प्रच्छिन्नो भवति तदा रजोगुणः प्रादुर्भवति तस्मात्कामक्रोधावुत्पद्येते तयोः क्रमेण स्वरूपमाह महाशन इति। तत्र कामो महाशनः दुःपूरत्वात् क्रोधस्तु महापाप्मा अतिक्रूरत्वात् अनयोरुभयोर्दुर्जयत्वं व्यञ्जितं एवमेनं कामं क्रोधं वा वैरिणं विद्धि उभयोरपि पापप्रवृत्तिहेतुत्वात् शत्रुरेव पापे प्रवर्तयति न तु मित्रं यथा त्वं बन्धुसुहृद्विषयकामेन स्वधर्मत्यागरूपे पातके प्रवर्त्यस इत्यर्थ इत्याहुः॥ ३७॥

यदुक्तं मुमुक्षोर्मुक्तिप्रतिबन्धकत्वेन वैरित्वं कामस्य तदेव विस्पष्टयति द्वाभ्यां—

**धूमेनाव्रियते वन्हिर्यथाऽऽदर्शो मलेन च।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्॥ ३८॥**

धूमेनाप्रकाशस्वरूपेण स्वयं प्रकाशस्वरूपोपि वन्हिर्यथाऽऽव्रियते आवृतो भवति मेलन लेपनस्वभावेन रजसा स्वयं बिम्बप्रकाशनेनाल्हादकर आदर्शश्च यथाऽऽव्रियते अचेतनेनोल्बेन चेतनो गर्भः शिशुर्यथाऽवृतो भवति तथाऽप्रकाशस्वरूपेण लेपकेनाचेतनेन च तेन पूर्वोक्तेन कामेन प्रकाशस्वरूपमात्मप्रकाशनेनानन्दकरं आभासव्याप्त्या चेतनतुल्यमिदं पुरुषस्य ज्ञानमावृतं तिरोहितमित्यर्थः॥ ३८॥

ज्ञानावरणमेव विशदयति—

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेनच॥ ३९॥**

आवृतमिति। यस्मादनलेन निरन्तरविषयसेवयाऽप्यलम्भावो यस्य नास्ति सोनलः, हृद्यन्तरनलवदाचरतीति वाऽनलस्तेन दुष्पूरेण दुःखेन पूरणमिष्टप्रापणं यस्य स दुष्पूरः कामिताप्राप्तौ पुरुषं दुःखेन पूरयतीति वा दुष्पूरस्तेन कामरूपेण काम्यतइति कामो विषयस्तमेव सर्वत्र रूपयति गोचरयति न क्वचिद्ब्रह्मेति कामरूपस्तेन तस्मादेव ज्ञानिनो नित्यवैरिणा नित्यं बाह्यालम्बनहेतुत्वेन प्रतिकूलत्वान्नित्यवैरी नित्यग्रहणहेतोर्ज्ञानस्यावरकत्वाद्वा नित्यवैरिणा एतेन कामेन ज्ञानं सर्वत्र ब्रह्मग्राहिका बुद्धिवृत्तिरावृतपङ्केन जलमिव राहुणा चन्द्रबिम्बमिव पिहितमित्यर्थः।

अन्ये तु इदं त्रयमित्थं योजयन्ति तथाहि एवमर्जुनेन पृष्टे अथो खल्वाहुः काममय एवाऽयं पुरुष इत्यादिश्रुतिसिद्धमुत्तरमाह कामेति । यस्त्वया पृष्टो हेतुर्बलादनर्थमार्गे प्रवर्तकः स एष काम एव शत्रुः यन्निमित्ता सर्वानर्थप्राप्तिर्जनानाम् । ननु क्रोधोऽप्यनर्थहेतावभिचारादौ प्रवर्तको दृष्टः कथमेष एवेत्यत आह क्रोध एष काम एव केनचिन्निमित्तेन प्रतिहतः क्रोधत्वेन परिणमतेऽतः क्रोधोप्येष काम एव यतस्मिन्नेव महावैरिणि निवारिते सर्वपुरुषार्थप्राप्तिरिति भावः । तन्निवारणोपायज्ञानाय तत्कारणमाह रजोगुणसमुद्भवः दुःखहेतुप्रवृत्तिजनको रजोगुण एव समुद्भवः प्राधान्येन कारणं यस्य सः अतस्तन्मूलत्वात्कामोपि तथेत्यर्थः एतेन सात्विक्या वृत्त्या रजसि क्षीणे कामोऽपि क्षीयत इत्युक्तम् । यद्वा तस्य कथमनर्थमार्गमूलत्वमित्याशङ्क्याह रजोगुणस्य प्रवृत्त्यादिरूपस्य समुद्भवो यस्मात् सः कामो हि विषयाभिलाषात्मकः स्वयमुद्भूतो रजोगुणं प्रवर्त्तयन्पुरुषं दुःखहेतौ कर्मणि प्रवर्तयति तेनायमवश्यं हन्तव्य इति भावः । ननु मास्तु दण्डो दानोपायेन निवर्तिष्यतीत्यत आह महदशनमस्येति महाशनः—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूयएवाभिवर्द्धते ॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥

इति स्मृतेः । अतो न दानेन सन्धातुं शक्यः नापि सामभेदाभ्यां यतो महापाप्माऽत्युग्रो विनाप्यपराधमपकारं करोत्युपकृतं च नाशयत्यत एव तेन बलात्प्रेरितोऽनिष्टफलं पापं जानन्नपि करोति अतएवैनं काममिह संसारे वैरिणं विद्धि जानीहि ज्ञात्वा च तद्वारणाय यतस्वेति भावः ।

वैरित्वमेव दृष्टान्तैः स्पष्टयति धूमेनेति । कामो हि जन्मनः प्रागन्तःकरणस्यालब्धवृत्तिकत्वात्सूक्ष्मो भवति तदनन्तरं लब्धवृत्तिकेऽन्तःकरणेऽभिव्यक्तः स्थूलः स एव विषयाचिन्तनावस्थायां स्थूलतरः स एव पुनस्तद्भोगावस्थायां स्थूलतमो भवति तत्राद्यावस्थायां दृष्टान्तः यथा धूमेन सहजेनाप्रकाशात्मकेन वह्निराव्रियते द्वितीयावस्थायां दृष्टान्तः यथा मलेनासहजेनादर्शोत्पत्त्यनन्तरं वर्द्धमानेनादर्शो दर्पण आव्रियते इत्यनुषङ्गार्थश्चकारः तृतीयावस्थायां दृष्टान्तः यथोल्बेन जरायुणाऽतिस्थूलेन सर्वतो निरुद्ध्यावृतो गर्भः तथा प्रकारत्रयेणाप्येतेन कामेनेदं ज्ञानमावृतम् । तत्राद्यावस्थेन कामेन ज्ञान-

स्यात्मस्वरूपप्रकाशात्मकत्वं द्वितीयावस्थेन यथावद्विषयस्वरूपप्रतिभानात्मकत्वं तृतीयावस्थेनोहापोहात्मकत्वं चतुर्थावस्थेन सारासारविवेचकत्वमाच्छादितमिति बोध्यम् । अत्र यथा धूमेनावृतोपि वन्हिर्दाहादिकं स्वकार्यं करोति मलेनावृतस्त्वादर्शः प्रतिबिम्बग्रहणात्मकं स्वकार्यं न करोति स्वच्छताधर्ममात्रतिरोधानात्स्वरूपतस्तूपलभ्यतएव उल्बेनावृतस्तु गर्भो न हस्तपादादिप्रसारणरूपं स्वकार्यं करोति न वा रूपत उपलभ्यते तथा प्रकृतेपीति विशेषो बोध्यः ।

किं पुनस्तदिदंशब्दवाच्यं यत्कामेनावृतमित्याकाङ्क्षायामाह आवृतमिति । हे कौन्तेय एतेन कामेन ज्ञानं आवृतम् । नन्वापाततः सुखहेतुत्वादुपादेयः स्यादित्यत्राह ज्ञानिनो नित्यवैरिणा अज्ञो हि विषयभोगकाले कामं मित्रमिव पश्यंस्तकार्ये दुःखे प्राप्ते वैरित्वं जानाति कामेनाहं दुःखी जात इति ज्ञानी तु भोगकालेऽपि जानात्यनेनाहमनर्थे नियोजित इति अतो भोगकाले तत्परिणामे च दुःखहेतुत्वादसौ ज्ञानिनो नित्यवैरीति सर्वथा तेन हन्तव्य एवेत्यर्थः । केन रूपेण वैरीत्यत आह कामरूपेण कामामिच्छा तृष्णा सैव रूपं यस्य तेन । ननु ज्ञानिना हन्तव्यत्वेप्यज्ञेनोपादेयः स्यादित्यत आह दुःखेन पूरणमस्य तेन दुःपूरेण । कुत इत्यत आह अनलेन नाल पर्याप्तिरस्य विद्यत इत्यनलस्तेन यो हि कदाचित्तृप्तिं गच्छति सः पूरयितुं शक्य अयन्तु न तथेत्यर्थः चकार उपमार्थः अनलो वन्हिः स इव दुःपूरः स यथा हविषा पूरयितुमशक्यस्तथाऽयमपि भोगेनेति वाऽर्थः ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥

इतिस्मृतेः अतः सर्वदा सन्तापहेतुत्वाज्ज्ञानिनेवाज्ञानिनापि हेय एवेति भावः । यद्वेच्छाया विषयसिद्धिनिवर्त्यत्वादिच्छारूपः कामो विषयभोगेन स्वयमेव निवर्तिष्यते किं तत्र प्रयत्नेनेत्यत उक्तं दुःपूरेणानलेन चेति विषयसिद्ध्या तत्कालमिच्छातिरोधानेऽपि पुनः प्रादुर्भावान्न विषयसिद्धिरिच्छानिवर्तिका किन्तु विषयदोषदृष्टिरेव तन्निवर्तिकेति भावः । बन्धुवियोगो मा भवत्वित्येवंरूपेण कामेनावृतज्ञानः सन् त्वमपि स्त्रीस्वभावे शोकमोहरूपे नियोजितोऽसीति द्योतनार्थं सम्बोधनम् । नन्विच्छाकामयोर्भेदोऽस्ति न वास्ति चेत्सो वक्तव्यो नास्ति चेत्तदा प्रश्नोत्तरयोरनुपपत्तिरेकविषयकेच्छातदभावोक्तिविरोधात् तथाहि अथ के तेत्यत्र प्रश्ने तावदनिच्छन्नपीति पापेच्छाऽभावोक्तेः काम एष इत्युत्तरे तु कामापरपर्यायेच्छायाः पापहेतुत्वोक्त्या पापेच्छासद्भावावगमादिति चेन्न, इच्छातदभा-

वयोर्भिन्नविषयकत्वात् प्रश्ने तावत् पापमनिच्छन्नपीति पापविषयकेच्छाभाव उक्त उत्तरे तु तत्फलभूतपरधनलाभादिविषयककामस्य पापहेतुत्वोक्त्या तत्सद्भावउक्तोऽत इच्छाकामयोरैक्येपि तद्भावाभावयोर्भिन्नविषयकत्वान्न काप्यनुपपत्तिरतः पापविषयककामाभावगर्भितप्रश्नस्य तत्फलविषयककामगर्भितोत्तरस्य चोपपत्तिरित्यवेहि येस्तु पापसाध्यं फलं नरकपातादिरूपमनिच्छन्नपि पापं चरतीति व्याख्यायते तेषां पक्षे तु शङ्कोत्थानमेव नास्ति कामतदभावयोर्भिन्नविषयकत्वस्य स्पष्टत्वादित्यपि बोध्यम् ॥ ३९ ॥

सुखेन शत्रुं नाशयितुं तदधिष्ठानं दर्शयति—

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

इन्द्रियाणीति । इन्द्रियाणि शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रादीनि वचनादानगमनविसर्गानन्दजनकानि वागादीनि च मनस्सङ्कल्पात्मकं बुद्धिरध्यवसायात्मिका चास्य कामस्याधिष्ठानमाश्रय उच्यते । कुतोऽधिष्ठानमत आह यत एष काम एतैरिन्द्रियादिभिः स्वस्वव्यापारवद्भिराधिष्ठानैर्ज्ञानं विवेकज्ञानमावृत्याच्छाद्य स्वकार्याक्षमं कृत्वा देहिनं देहाभिमानिनं जीवं विमोहयति विविधं मोहमविवेकं प्रापयतीत्यर्थः ॥ ४० ॥

एवं तदधिष्ठाने ज्ञाते तन्निरोधेन तन्निवर्त्यत्वमाह—

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥**

तस्मादिति । हे भरतर्षभ यस्मादिन्द्रियाद्याश्रय एव कामो देहिनं विमोहयति तस्मात्त्वमादौ मोहनात्पूर्वं कामनिरोधात्पूर्वं वा इन्द्रियाणि नियम्य वशीकृत्य स्वस्वव्यापारेभ्यो निवर्त्य पाप्मानं सर्वपापमूलभूतमेनं कामं वैरिणं प्रजहि आत्मनः सकाशात्परित्यज तत्पराभवं कुरु हि यस्मात् ज्ञानविज्ञाननाशनं ज्ञानं शास्त्राचार्योपदेशजं परोक्षं विज्ञानं तत्फलमपरोक्षं यद्वा ज्ञानं तत्त्वम्पदार्थज्ञानं विज्ञानं तदैक्यसाक्षात्कारस्तयोर्ज्ञानविज्ञानयोरनर्थनिवृत्तिपरमानन्दप्राप्तिहेत्वोर्नाशनमदर्शनसम्पादकमित्यर्थः नश अदर्शन इति स्मृतेः तथा च मुमुक्षुणा मोक्षसाधनज्ञानविज्ञानप्राप्तये यतमानेनेन्द्रियाणि नियम्य ज्ञानविज्ञानावरकः कामस्त्याज्य एव उत्पन्नयोस्तु ज्ञानविज्ञानयोर्नाशनं तदभिभवेन तत्कार्याक्षमत्वसम्पादकत्वं कदाचित्प्रारब्धवशादाभासरूपेणो-

त्पन्नस्य कामस्य सम्भवतीति भावः । भरतैरप्ययं शत्रुः त्यक्तस्त्वन्तु भरतर्षभोतस्त्वयापि त्याज्यएवेति सूचनाय सम्बोधनम् । इन्द्रियेषु वशीकृतेषु मनोबुद्ध्योरपि वशीकरणं सिद्ध्यति सङ्कल्पाध्यवसाययोर्हीन्द्रियप्रवृत्ति द्वारैवानर्थहेतुत्वादतो न तयोः पृथग्ग्रहणं इन्द्रियत्त्वेन तयोरपि सङ्ग्रह इति वा बोध्यम् ।

अन्येत्विदं द्वयमित्थं योजयन्ति तथाहि ननु संसारकारणं कामस्तत्कार्यं ज्ञानातिरोधानं विषयसन्निधापनं तापनं दुःखप्रापणं च निरूपितं तथापि मुमुक्षोस्तज्जयो दुर्घटस्तदधिष्ठानाऽज्ञानाज्ज्ञाते हि शत्रोः स्थाने तज्जित्यै यत्नः कर्तुं शक्यत इत्याकाङ्क्षायामाह इन्द्रियाणीति ।

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥

इतीत्येतच्छ्रुतितात्पर्यज्ञैरिन्द्रियादीनां कामाश्रयत्वमुच्यते कामस्यैव तच्चेष्टाहेतुत्वात्तत इन्द्रियाणि चक्षुरादीनि मनो बुद्धिश्चास्य कामस्याधिष्ठानमाश्रय इति बोद्धव्यम् । स्वप्रवृत्तेर्द्वारभूतैरिन्द्रियव्यापारैरेष कामो ज्ञानं प्रत्यग्दृष्टिमावृत्य वृत्तेर्बहिः प्रणवतां कृत्वा देहिनं देहात्मबुद्धिं पुरुषं ज्ञानिनमज्ञानिनं च मोहयति अहं भोक्ता इदं भोग्यं रम्यमिदमरम्यं सुखमिदं दुःखमित्यादिना विविधं भावयति कामदोषेणैव बुद्धेश्चलनं देहेन्द्रियादितादात्म्यापत्तिरहं ममेति संसारः पुंस इत्यर्थः ।

निःशेषकामनिबर्हणाभावे बुद्धेर्नैश्चल्यं न सम्भवति तदसम्भवे ज्ञानं विशुद्धं न भवति तदभावे मोक्षाभावस्ततो मुमुक्षुणा तज्जयोऽवश्यं कर्तव्य इति सूचयितुमाह तस्मादिति । हि यस्मान्मनोबुद्धीन्द्रियव्यापारैकबलः कामो मुमुक्षोस्तव नित्यशत्रुस्तस्मात्त्वमादाविन्द्रियाण्यनन्तरं मनो बुद्धिं च नियम्य विषयग्रहणविमुखानि कृत्वा इन्द्रियाण्यादावित्युक्तिर्मनोबुद्ध्योर्नियमनं सूचयति नियमविधावादिपदस्यानन्तरकृत्यद्योतकत्वात्सत्यामन्तर्विषयचिन्तायामिन्द्रियनिग्रहस्य विफलत्वात् 'मनस्तु पूर्वमादद्यात्कुमीनमिव मत्स्यहेति'वचनाद्वस्तुदर्शने मनस एव कारणत्वाच्चात इन्द्रियनियमनानन्तरमेव मनोबुद्ध्योरपि निग्रहः कर्तव्य एव । एवं कामाधिष्ठाननिरोधं कृत्वा ज्ञानविज्ञाननाशनं ज्ञानं श्रुतियुक्तिभिः पर्वते वन्हिरस्तीतिवत्परोक्षको वस्तुनिश्चयः सर्वं ब्रह्मैवेति, विज्ञानं तु विषयव्याप्तवृत्तिजन्यमहानसाग्निज्ञानवदिदमेवाहमित्येवंरूपयोर्मोक्षै-

कप्रयोजनयोश्चन्द्रसूर्ययोरिव विशेषस्फुरणयोर्ज्ञानविज्ञानयोर्नाशनं विध्वंसकमतएव स्ववैरिणं पाप्मानं पापिष्ठमेनं कामं प्रजहि निःशेषं विध्वंसयेत्यर्थः ॥ ४० । ४१ ॥

ननु कामो दुर्जयः दुर्जयस्य जये बलवदाश्रयोऽपेक्ष्यते मुमुक्षुः कमाश्रित्य कस्य महिम्ना कामं जयेदित्याकाङ्क्षायां "रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्तते" इतिन्यायेन परमात्मानं सर्वान्तरं सर्वगमवगम्य तदाश्रयेणेन त्वं कामं जहीति बोधयितुमात्माधिगमप्रकारमाह—

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**

**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥**

इन्द्रियाणीति । 'इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः' इत्याद्याः श्रुतय इन्द्रियाणि पराण्याहुः इन्द्रियाणि श्रोत्रादीनि पंच वागादीनि कर्मेन्द्रियाणि च स्वापेक्षया जडं बाह्यं स्थूलं व्याप्यं कार्यं प्रवर्त्यं च यच्छरीरं तस्मात्प्रकाशकत्वान्तरत्वसूक्ष्मत्वप्रवर्तकत्वव्यापकत्वकारणत्वादिधर्मैः पराण्युत्कृष्टतराण्याहुर्वदन्ति येन यत्प्रकाश्यते प्रवर्त्यते च तत्तदपेक्ष्य व्यापकं सूक्ष्मं परं भिन्नं च भवति यथाऽयसोयस्थो वन्हिस्तथा देहमपेक्ष्येन्द्रियाणि देहतद्धर्मप्रकाशकत्वात्प्रवर्तकत्वाच्च पराणि भिन्नानि च भवन्तीत्यर्थः तथेन्द्रियेभ्यो मनः प्रकाशकत्वादिधर्मेणपरमुत्कृष्टं भिन्नं च भवति इन्द्रियतद्धर्माणां प्रकाशकत्वादिधर्मैर्बुद्धिः परा भवति बुद्ध्या खलु मनस्तद्धर्माश्च प्रकाश्यन्ते प्रवर्त्यन्ते च ततस्तत्परत्वं भिन्नत्वं च बुद्धेः सिद्धमेव सूक्ष्मान्तरत्वव्यापकत्वकारणत्वप्रवर्त्तकत्वप्रकाशकत्वादिधर्मैर्यः स्वयं सर्वतो व्याप्यबुद्ध्यादिस्थूलपर्यन्तकार्यकरणसंघातं स्वसन्निधिमात्रेण प्रवर्तयन् तद्धर्मतत्कर्मगुणतद्विकारांश्च सर्वानविकारात्मना साक्षाज्जानाति प्रकाशयति स एवात्मा बुद्धेः परतः परः सर्वस्मादुत्कृष्टतमः भिन्नश्च नित्यत्वात्सर्वज्ञत्वात्सर्वप्रकाशकत्वात्सर्वसाक्षित्वाच्च 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रिति श्रवणात् यत एवं ततः सर्वस्मात्परं सर्वद्रष्टारमतएव देहेन्द्रियादिभ्यो भिन्नं सर्वप्रकाशकं चिदानन्दैकरसं सन्मात्रं परिपूर्णमेतमेव स्वात्मानं विजानीहीत्यर्थः ।

अन्ये तु इत्थं योजयन्ति । इन्द्रियाण्यादौ नियम्य वैरिणं कामं जहीत्युक्तं तत्र किमाश्रयः कामं जह्यादित्याकाङ्क्षायां रसोप्यस्य परं दृष्ट्वा निवर्तत इत्यत्रोक्तं रसपदाभिधेयतृष्णात्यागसाधनं परदर्शनं स्मारयन्

परपदाभिधेयं शुद्धमात्मानमाश्रयं देहादिभ्यो विविच्य दर्शयति इन्द्रियाणीति। इन्द्रियाणि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि स्थूलं जडं परिच्छिन्नं बाह्यं च देहमपेक्ष्य पराणि सूक्ष्मत्वात्प्रकाशकत्वाद्व्यापकत्वादन्तःस्थत्वाच्च प्रकृष्टान्याहुः पण्डिताः श्रुतयो वा तथेन्द्रियेभ्यः परं मनः तत्प्रवर्तकत्वात् मनसस्तु परा बुद्धिः निश्चयात्मिकबुद्ध्यधीनत्वात्सङ्कल्पात्मकमनःप्रवृत्तेः यस्तु बुद्धेः परतस्तद्भासकत्वेनावस्थितः यं देहिनमिन्द्रियाद्याश्रयः सन्कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तं स बुद्धेर्द्रष्टा पर आत्मा स एष इह प्रविष्ट इतिवद्व्यवहितस्यापि देहिनस्तत्पदेन परामर्शः।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः॥

इतिश्रुतेः। अत्रात्मनः परत्वस्यैव वाक्यतात्पर्यविषयत्वादिन्द्रियादिपरत्वस्याविवक्षितत्वादिन्द्रियेभ्यः परा ह्यर्थाः इति स्थानेऽर्थेभ्यः पराणीन्द्रियाणीतिविवक्षाभेदेन भगवदुक्तं न विरुध्यते बुद्धेर्व्यष्टिबुद्धेर्महानात्मा समष्टिबुद्धिरूपो हिरण्यगर्भः परस्तस्मान्महतः समष्टिबुद्धिरूपात्परमव्यक्तं जगद्बीजं मायाख्यं तस्मादव्यक्तात्पुरुषः पूर्णआत्मा परस्तस्मात्पुरुषान्न परं किञ्चित् कुत एवं यस्मात्सा काष्ठा समाप्तिः सर्वाधिष्ठानत्वात्सा परा गतिः सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमित्यादिश्रुतिप्रसिद्धा परा गतिरपि सैवेत्यर्थः तदेतत्सर्वं यो बुद्धेः परतस्तु स इत्यनेनोक्तम् ॥४२॥

ततः किमित्याकाङ्क्षायामिन्द्रियादिसमाधानपूर्वकादात्मज्ञानात्कामजयो भवतीत्युपसंहरति—

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसम्वादे कर्मयोगो नाम तृतीयोऽध्यायः ॥३॥**

एवमिति। आत्मना संस्कृतमनसा पूर्वोक्तनिश्चयात्मिकबुद्ध्या वा आत्मानं मनः संस्तभ्य स्थिरीकृत्य समाधाय एवं रसोऽप्यस्य 'परं दृष्ट्वा निवर्तते इत्यत्र परशब्देनोक्तं पूर्णमात्मानं बुद्धेः परं तत्साक्षिभूतं बुद्ध्वा साक्षात्कृत्य शत्रुं सर्वपुरुषार्थशातनं कामरूपं तृष्णारूपं दुरासदं दुःखेना-

सादनीयं दुर्विज्ञेयानेकविशेषं जहि परित्यजेत्यर्थः महद्भिर्बहुभिरप्युपायैर्जेतुमशक्यमप्येनं कामरूपं शत्रुं मदुक्तेनोपायेन जेतुं योग्योसीति सूचनाय महाबाहवित्युक्तं उपायः कर्मनिष्ठाऽत्र प्राधान्येनोपसंहृता उपेया ज्ञाननिष्ठा तत्तद्गुणत्वेन कीर्तिता ।

अन्ये तु एवं बुद्ध्यादेर्दृश्यजातस्य द्रष्टारमात्मानं सन्मात्रमात्मत्वेनाधिगम्य तन्निष्ठया स्वशत्रोः कामस्य संसारहेतोर्निःशेषनिर्मूलनं कुर्विति कर्मयोगस्य मोक्षोपायभूतस्योपेयभूतया ज्ञानयोगनिष्ठया सम्भाव्यमानसर्वकामनिर्मोक एव मुक्तिरिति सूचयन् कर्मयोगमुपसंहरति एवमिति। मुमुक्षोः कामरूपशत्रुसंहारस्य पटीयस्त्वद्योतनार्थं सम्बोधनं हे महाबाहो। बुद्धेर्बुध्यादेः सर्वदृश्यस्य परं विलक्षणं द्रष्टारमखण्डानन्दैकरसमात्मानमयमेवाहमस्मीत्येवं स्वात्मना सम्यग्बुद्ध्वा आत्मन्येवात्मत्वबुद्धिं दृढां कृत्वा त्वमात्मानं कामस्याश्रयभूतं कारणभूतं चान्तःकरणमात्मना स्वस्वरूपेणान्तर्बहिःपूर्णेनाखण्डैकरसेन संस्तभ्य संयोज्यारोपितनामरूपग्रहणमकृत्वा तदधिष्ठानभूतब्रह्मदर्शन एव नियोज्य सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मदर्शनादन्यत्र दुरासदं दुर्जयं जेतुमशक्यस्वभावं कामरूपं शत्रुं जहि-विध्वंसय विशिष्य विषयग्रहणमेव कामाविर्भूतिकारणं सर्वत्र ब्रह्मदृष्ट्या तदग्रहणमेव कामविनाशनहेतुरतः सर्वं ब्रह्मैव पश्यन् कामं निर्मूलयेदित्यर्थः। अत्र न कर्मणामनारम्भादिति कर्मयोगमुपक्रम्य मुमुक्षोस्तत्त्यागनिन्दनपूर्वकं बहुवचनैः कर्मण एव कर्तव्यत्वं प्रतिपाद्य अहं ममेति प्रवृत्तिलक्षणस्य संसारस्य कारणं कामएवेति काममाहात्म्यं वर्णयित्वा कर्मणा प्राप्तचित्तशुद्धेः पुरुषस्य ज्ञानयोगनिष्ठया तज्जयः कर्तव्य इति वदता भगवता कामा येऽस्य हृदि श्रिता इत्यादिश्रुतिप्रमाणकः कामनिर्मोक एव मोक्ष इति सूचितं भवति । तेन मोक्षहेतोर्ज्ञानयोगस्यैव प्राधान्यं कर्मयोगस्योपसर्जनतैवेत्यस्याध्यायस्य ज्ञानयोगपर्यवसायित्वात्तत्परत्वमेवेति सिद्धम् ।

यज्ञाद्यं वर्णधर्मोचितमपि नियतं कर्म शर्मप्रदं स्यात्  
न त्याज्यं कार्यमेतद्विगुणमपि यतोऽकर्मणः कर्म शस्तम् ॥  
जीवन् मर्त्यः कदाचित्करचरणयुतो नैव तिष्ठत्यकर्मा  
तस्माच्छ्रेयान्स्वधर्मो यदुपतिगदितश्चित्तशुद्ध्यै तृतीये ॥ १ ॥

इत्यध्यायतात्पर्यसंग्रहश्लोक इत्याहुः ४३ ॥

इति श्रीमद्रामचन्द्रप्रीत्यभिलाषिणा जयरामाख्येन विदुषा विरचितायां श्रीभगवद्गीतासारार्थसंग्रहाख्यायां तृतीयोध्यायः ॥३॥ ग्रन्थसंख्या ११००

श्रीगणेशायनमः ।

श्रीरामचन्द्रायनमः ।

स्वधर्मेण यमाराध्य भक्त्या मुक्तिमिता बुधाः ।
तं कृष्णं परमानन्दं तोषयेत्सर्वकर्मभिः ॥ १ ॥

एवं द्वितीयतृतीयाध्याययोर्ज्ञानयोगः कर्मयोगैकोपायः एषा ब्राह्मी स्थितिरिति संस्तभ्यात्मानमात्मनेत्यादिवाक्यैर्मोक्षैकफलत्वेन प्रतिपादितोऽधुना तस्यैव योगस्य एष पन्था एतत्कर्म तद्ब्रह्मेत्यादिश्रुतिप्रमाणकत्वे सिद्धेऽपि सिद्धपरम्पराभ्युपगतत्वेनापि प्रामाण्यं सूचयितुमिदमाह श्रीभगवान्—

श्रीभगवानुवाच ।

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

इममिति । अहं परमात्मा सृष्ट्यादौ अव्ययं न स पुनरावर्तते इतिश्रुत्युक्ताव्ययमोक्षफलहेतुत्वादव्ययवेदप्रमाणकत्वाद्वाऽव्ययं नित्यफलमित्यर्थः इममध्यायद्वयेन प्रतिपादितं मोक्षैकप्रयोजनं योगं ज्ञानयोगं विवस्वते सूर्याय प्रोक्तवानस्मि स्वयं तीर्णः परान् तारयतीतिन्यायेन सोऽपि विवस्वान्मनवे स्वपुत्राय प्राहोक्तवान्मनुरपि स्वपुत्रायेक्ष्वाकवेऽब्रवीदुपदिष्टवानित्यर्थः ॥१ ॥

स्वप्रोक्तज्ञानयोगस्य विशिष्टजनपरिगृहीतत्वमेव विस्पष्टयति—

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥**

एवमिति । ब्रह्मनिष्ठया परं शत्रुं कामक्रोधादिलक्षणं तापयति नाशयतीति परन्तप एवमुक्तरीत्या विवस्वदादिविशिष्टजनपरम्पराप्राप्तमिमं ज्ञानयोगमर्वाचीना राजर्षयो जनकादयो विदुरेवमेव विदुरिति वा राजानश्च ते ऋषयश्च इदं ब्राह्मणादीनामुपलक्षणं राजानश्च ऋषयश्च विदुर्ज्ञातवन्तः तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेत्यादिश्रुतेः । ननु राजभिर्जनकादिभिः ऋषिभिर्वामदेवादिभिर्महापुरुषैः परिगृहीतत्वेन सर्वत्र प्रसिद्धत्वात्किं त्वयोपदिश्यत इत्यत आह स इति । पूर्वं विवस्वदादिषु मया

प्रवर्तितो यो योगः स इदानीं महता कालेन कालदेशविपर्यासेन प्रवर्त्य-प्रवर्तकजनाभावादिहास्मिँल्लोके नष्टः सम्प्रदायविच्छित्तिं प्राप्त इत्यर्थः ॥२॥

विनष्टसम्प्रदायः स योगः किमर्थं पुनरिदानीं त्वया प्रवर्तित इत्याकांक्षायां कूटस्थासङ्गचिद्रूपएवात्मन्यविक्रिये विषयेऽनात्मतद्धर्मकर्माण्यध्यस्य कर्त्ता-ऽहं भोक्ताऽहं सुखीति मोमुह्यमानमिमं लोकमालोक्य कृपया तं संसार-सागरादुद्दिधीर्षया मया त्वां निमित्तीकृत्य प्रवर्तित इत्याशयेनाह—

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥**

सएवेति। पूर्वं विवस्वते सम्प्रदायप्रवृत्तये पुरातनोऽनादिश्रुतिमूल-कत्वात्सनातनो यो योगः प्रोक्तः संसारध्वान्तविध्वंसकः स एवायं योगो मयाऽद्य ते कर्तृत्वादिभ्रान्त्या मुह्यमानाय तुभ्यं प्रोक्तो बुद्धिमोहविच्छित्तये उपदिष्ट इत्यर्थः। अर्जुनस्य ज्ञानोपदेशयोग्यतां दर्शयति भक्त इत्यादिना। 'यथा शिवमयो विष्णुरेवं विष्णुमयः शिव' इति शिवकेशवयोरभेदश्रवणाच्छि-वरूपं मामेव भजस्यतो मे भक्तोऽसि सदा मद्भजनशीलोऽसि सखा चासि सख्युः स्मरणश्रवणादिभिर्द्रवीभूयमानचित्तः स्निग्धश्चासि ममायं भक्तः स्निग्धश्चेति हेतोरेव स योगस्तउपदिष्ट इत्यर्थः। किमेवं पात्रपरीक्षणं योगोपदेशाय क्रियत इत्याशङ्क्याह रहस्यमिति। हि यस्मादेतज्ज्ञानशास्त्रं रहस्यं गोप्यं यस्मै कस्मैचित्पृष्टवते वक्तुमयोग्यं तत्कुत इत्यत आह उत्त-ममिति। उत्तमं सर्वोत्तमं परं ब्रह्म तत्प्राप्तिहेतुत्वादुत्तमं मुक्तेः साधनमतएव रहस्यमतएव न यस्मै कस्मैचिद्वक्तव्यमित्यर्थः।

अन्ये तु इदं त्रयमित्थं योजयन्ति। यद्यपि पूर्वाध्यायद्वयेनोपेयोपाय-भावेन ज्ञानयोगकर्मयोगौ कथितौ तयोरेव च वेदार्थस्य समाप्तत्वादुक्त-व्यावशेषो नास्ति तथापि तयोः कृत्रिमत्वशङ्कानिवृत्तये वक्ष्यमाणाध्यायेष्व-नेकविधगुणविधानाय च तदुपदेशसम्प्रदायकथनपूर्वकं स्तुतिं श्रीभगवानु-क्तवान् इममित्यादित्रिभिः। अहं इममध्यायद्वयेनोक्तं योगं कर्मनिष्ठोपायलभ्यं ज्ञानयोगं विवस्वते सर्वक्षत्रियवंशबीजभूतायादित्याय प्रोक्तवान् प्रकर्षेण सर्वसंशयोच्छेदादिरूपेणोक्तवानस्मि सर्गादिकाले राज्ञामनेन बलाधानेन तद्द्वारा सर्वजगत्पालयितुमित्यर्थः। कथमनेन बलाधानमित्याशङ्क्याह अव्ययं न व्येति स्वफलान्न व्यभिचरतीत्यव्ययमव्यभिचारिफलं यद्वा अव्य-येवेदमूलत्वादव्ययमोक्षफलत्वाच्चेत्यर्थः तथाचैतादृशेन बलाधानं संभवतीति

भावः । स च विवस्वान् मनवे वैवस्वताय स्वपुत्राय प्राह प्रोक्तवान् स च मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् उक्तवानित्यर्थः । यद्यपि प्रतिमन्वन्तरं स्वायम्भुवमन्वादिसाधारणोऽयं भगवदुपदेशस्तथापि वर्तमानमन्वन्तराभिप्रायेणादित्यमारभ्य सम्प्रदायो गणितइति बोध्यम् ॥ १ ॥

यथोक्ते योगे परम्परागते विशिष्टजनसंमतिमुदाहरति एवमिति । हे परन्तप एवमादित्यमारभ्य गुरुशिष्यपरम्परया प्राप्तमिमं योगं राजानश्च ते ऋषयश्चेति राजर्षयः ऐश्वर्यादिमत्वेन प्रभुत्वे सति सूक्ष्मार्थनिरीक्षणसमर्था निमिप्रभृतयः स्वपित्रादिप्रोक्तं विदुः लब्धवन्तः तस्मादनादिवेदमूलत्वेनानन्तफलत्वेनानादिगुरुशिष्यपरम्पराप्राप्तत्वेन च कृत्रिमत्वशङ्कानास्पदत्वान्महाप्रभावोऽयं योग इति श्रद्धातिशयाय स्तूयते । नन्वेवं परम्पराप्राप्तत्वे कथमिदानीमुच्यते इत्याशङ्क्याह स कालेनेति। स एवं महाफलोपि योगः महता दीर्घेण धर्मह्रासकरेण कालेन इह इदानीमावयोर्व्यवहारकाले द्वापरान्ते नष्टोऽजितेन्द्रियाननधिकारिणः प्राप्य कामक्रोधादिशत्रुभिराभिभूयमानतया विच्छिन्नसम्प्रदायो जातः तं विना पुरुषार्थाप्राप्तेरहो दौर्भाग्यं लोकस्येति शोचति भगवान् । परान् शत्रून् कामक्रोधादीन् शौर्येण विवेकेन तपसा च तापयतीति परन्तपः शत्रुतापनोऽजितेन्द्रिय इत्यर्थः । उर्वश्युपेक्षणाद्यद्भुतकर्मदर्शनात् त्वं जितेन्द्रियत्वादजितेन्द्रियान्प्राप्य नष्टं योगं मत्तः प्राप्य पुनर्लोकोद्धाराय स्थापयेति सम्बोधनाशयः ॥ २ ॥

पूर्वो योगो विच्छिन्नसम्प्रदायोऽधुना त्वन्ययोगो मदर्थमुच्यते भगवतेत्याशङ्क्याह स एवेति । य एव पूर्वमुपदिष्टोऽप्यधिकार्यभावाद्विच्छिन्नसम्प्रदायोऽभूत् यं विना च पुरुषार्थो न लभ्यते स एवायं पुरातनोऽनादिगुरुपरम्परागतो योगोऽद्य सम्प्रदायविच्छेदकाले मया ते तुभ्यं प्रकर्षेणोक्तः न त्वन्यस्मै कस्मैचित् । कस्मात् ? भक्तोसि मे सखा चेति इति शब्दो हेतौ यस्मात्त्वं मम भक्तः मत्प्रीतिमांश्च पुनः सखा समानवयाः स्निग्धः सहायोऽसि अतस्तुभ्यमुक्तइत्यर्थः । अन्यस्मै कुतो नोच्यते तत्राह हि यस्मादेतज्ज्ञानमुत्तमं रहस्यमतिगोप्यम् ॥ ३ ॥

अपरे तु एवं द्वितीयतृतीयाध्यायाभ्यां ज्ञानकर्मयोगौ निरूप्येदानीं ब्रह्मार्पणत्वेनैव कृतं कर्म मोक्षप्रापकं भवतीति निरूपणार्थं चतुर्थाध्याय आरभ्यते तत्र वक्ष्यमाणप्रमेयं मदुपदेशात्परम्परया बहुभिरनुष्ठितमित्याह इममिति त्रिभिः । इमं वक्ष्यमाणं योगं अव्ययमनुपक्षीणं पूर्वं विवस्वते

प्रोक्तवानस्म्यहं ततस्तमेव योगं विवस्वान् सूर्यो मनवे प्राह मनुरिक्ष्वाकवे-ऽब्रवीत् ॥ १ ॥

एवमिक्ष्वाकोः सूर्यवंशप्रधानीभूताद्राज्ञः सकाशात्परम्परया प्राप्तं राजर्षयो राजानो ऋषयश्च विदुर्ज्ञातवन्तः स एव पुरातनो योगो महता कालेन नष्टस्त्यक्तोऽभूत् ॥ २ ॥

सोऽयं योग इति कारणान्मया तेऽद्य प्रोक्तः वक्तुमुपक्रान्तः । इतीति किं यतस्त्वं मद्भक्तः सन् सखा भवसि साखित्वलक्षणा भक्तिस्त्वयि वर्तत इत्यर्थः । अथान्यत्रास्यानिर्वाच्यत्वमाह उत्तमं रहस्यं एकान्तवेद्यमित्यर्थ-इत्याहुः ॥ ३ ॥

भगवति सर्वज्ञे नित्येप्यनीश्वरत्वासर्वज्ञत्वशङ्का मूर्खाणां तत्परिहाराय बोधमिव कुर्वन्नर्जुन उवाच—

**अर्जुन उवाच ।**

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥**

अपरमिति । भवतो जन्म शरीरग्रहणमपरमवार्चीनमिदानीन्तनं वसुदेवगृहे विवस्वतश्चादित्यस्य जन्म परं पूर्वं सर्गादिकालेऽतो विरुद्धार्थतया कथमेतत् त्वमादौ प्रोक्तवानित्येतद्वचनं विजानीयां निश्चिनुयामित्यर्थः। त्वमिदानीन्तनो मनुष्योसर्वज्ञः सर्गादौ प्रादुर्भूताय सर्वज्ञायादित्याय प्रोक्तवानित्येतद्वचनं विरुद्धार्थं मम भातीति भावः ।

ननु तव देहान्तरावच्छेदेनादित्यं प्रत्युपदेष्टृत्वमेतद्देहावच्छेदेन वा नाद्यः जन्मान्तरानुभूतस्यासर्वज्ञेन स्मर्तुमशक्यत्वात् जन्मान्तरानुभूतं च न स्मर्यत इत्यभियुक्तोक्तेः अन्यथा ममापि जन्मान्तरानुभूतस्मरणप्रसङ्गस्तव मम च मनुष्यत्वेनासर्वज्ञत्वाविशेषात् नापि द्वितीयः सर्गादाविदानीन्तनस्य देहस्यासद्भावादिति पक्षद्वयाभिप्रायेणार्जुनस्य प्रश्नः तत्र द्वितीयस्यानङ्गीकारेण निरस्तत्वादाद्यस्य सर्वज्ञत्वेन परिहारं श्रीभगवानुवाच—

**श्रीभगवानुवाच ।**

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥**

बहूनीति । हेऽर्जुन मे मम जन्मानि लीलादेहप्रादुर्भावानि बहूनि

व्यतीतान्यतिक्रान्तान्यतीतानेकजन्मवत्वं ममैव नासाधारणं किन्तु सर्व प्राणिसाधारणमित्यभिप्रेत्याह तव चेति । तवाज्ञानिनः चादन्येषामपि जीवानां जन्मानि कर्मार्जितानि देहप्रादुर्भावानि बहून्यनेकानि व्यतीतानीत्यनुषङ्गः । तानि प्रमाणाभावान्न प्रतिभान्तीत्याशङ्क्याह तानीति । तानि जन्मानि सर्वाणि मदीयानि त्वदीयान्यन्यदीयानि वाऽहं सर्वज्ञः सर्वशक्तिरीश्वरो वेद जानामि नित्यशुद्धबुद्धमुक्तस्वभावत्वेनानावृतज्ञानत्वात्स्वतःसिद्धं मम सर्वज्ञत्वमितिभावः। अत्र वृक्षपाण्डवसाधारणार्जुननाम्ना सम्बोधयन्नावृतज्ञानत्वं सूचयति । तर्हि किमिति तानि मम न प्रतीयन्ते तवावृतज्ञानत्वादित्याह न त्वमिति । त्वं न वेत्थ न जानीषे धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वादित्यर्थः परान्परिकल्प्य तत्परिभवार्थं रागद्वेषादिपूर्वकं प्रवृत्तत्वात्तव ज्ञानावरणं सम्भाव्यते इत्यभिप्रेत्याह परन्तपेति । परं शत्रुं भेददृष्ट्या परिकल्प्य तापयतीत्यर्थः तदनेन सम्बोधनद्वयेनावरणविक्षेपौ द्वावप्यज्ञानधर्मौ दर्शिताविति बोध्यम् ॥ ५ ॥

अन्यराजसाधारणोऽयं कृष्णः वसुदेवपुत्रत्वादनेनोक्तमिदं शास्त्रमप्रमाणमित्याशङ्कायामत्र गीतायां सर्वेषामविश्वासः स्यात्तद्वक्तुर्भगवत ईश्वरत्वे विज्ञाते श्रद्धाभक्तिभ्यां प्रवृत्तिः सम्पद्येत तया सर्वे कृतार्थाः स्युरिति श्रीकृष्णस्य परमेश्वरत्वं तन्मुखेनैव प्रथयितव्यमित्याशयेनार्जुन उवाच अपरमिति । भवतः श्रीकृष्णाभिधानस्य जन्मापरमर्वाचीनं वसुदेवगृहे त्वदुत्पत्तेर्दृष्टत्वाद्विवस्वतः सर्वजगत्प्रकाशकं तेजोऽस्यास्तीति विवस्वान् सूर्यस्तस्य तु जन्म परं प्राचीनं सृष्ट्यादौ चक्षोः सूर्यो अजायतेतिश्रुतेः । एवमुभयोर्जन्मव्यत्यासे सति त्वमादौ विवस्वत इमं योगं प्रोक्तवानित्येतद्वचनं सत्यमित्यहं कथं विजानीयामन्यो वा कथं विजानीयात् एष वन्ध्यासुतो यातीति वाक्यइवास्मिन्वाक्ये त्वदुक्तगीताशास्त्रे च सर्वेषामविश्वास एवोदेतीत्यर्थः ॥ ४ ॥

इदं मम मायाविलासवैभवमेव सत्यमिति जानतां केवलमूढानामेवं प्रत्ययो न तु मत्तत्वं विदितवतां पण्डितानां तेषामस्त्येव मयीश्वरत्वभावना श्रद्धा भक्तिश्च मदुक्तौ च प्रमाणताबुद्धिः अहन्तु स्वयमजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावस्तथापि तस्यैतस्य स्वमहिम्ना सिद्धनित्यज्ञानैश्वर्यशक्तिबलवीर्यतेजःसम्पन्नस्य लोकनिग्रहानुग्रहचिकीर्षोर्ममैवमेव बहूनि जन्मानि सन्तीत्याह बहूनीति ममाप्रमेयस्वभावस्यानन्तशक्तेः परमेश्वरस्य देवतिर्यङ्मनुष्येषु जन्मानि बहून्यसङ्ख्यानि सन्ति व्यतीतान्य-

तिक्रान्तानि तव चान्येषां च भूतानां तानि गतानि जन्मानि सर्वाण्यहं वेद वेद्मि न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति श्रवणादप्रतिहतविज्ञानशक्तित्वादतीतानागतवर्तमानार्थं सर्वं विजानामीत्यर्थः । तर्ह्यावयोर्विशेषः क इत्यत आह नेति । त्वं तु तानि जन्मानि न वेत्थ पापपुण्यरागद्वेषादिदोषैस्तिरोभूतज्ञानशक्तित्वान्न किंचिज्ज्ञानासीत्यर्थ इत्येवमिदं द्वयमन्यैर्व्याख्यातम् ॥ ५ ॥

ननु कर्मणा जायते जन्तुः कर्मणैव प्रलीयत इति स्मरणाज्जन्मादिहेतो पुण्यपापादेरभावात्तवेश्वरस्य स्वतन्त्रस्य कथं जन्मादिरित्याकाङ्क्षायां माययैव मम जन्मादयो न तु लोकवत्कर्मणेति बोधयितुमाह—

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**

**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥**

अजइति । कदाचित्कथञ्चित्कुतश्चिन्न जायत इत्यजः न तस्य कश्चिज्जनिता न चाधिप इतिश्रवणाज्जन्महेतोरुपादानादेरभावाज्जन्मरहित एवास्मि एवमजः सन्नपि तथाऽव्ययात्मा निरवयवत्वेन विनाशकारणसामग्रीसम्बन्धायोगादव्ययः नाशनक्रियाया अविषय आत्मा स्वभावो यस्य सोऽव्ययात्मा नित्य एवास्मि न क्वचिदपि षड्विकारवानित्यर्थः । अजो नित्य इति श्रुतेः । अजोऽव्ययात्मेति विशेषणद्वयं तदन्तरालविकारासंभवद्योतनार्थम् आद्यन्तयोरभावे तदन्तरालावस्थाकल्पनायोगात् । ननु तव कर्मनिमित्तकजन्माभावेऽपीश्वरनियमात्स्यादेवेत्यत आह भूतानामिति । ब्रह्मादीनामन्येषाञ्च भूतानामहमेवेश्वरो नियन्ता स्वसान्निधिमात्रेण एष सर्वेश्वर इतिश्रुतेः । न तु ममान्योऽस्ति नियन्ता न चाधिप इतिश्रुतेरतोऽहं न कस्यापि च नियोगविषयः एवमजोऽप्यव्ययात्मापीश्वरोऽपि च सन्नहं निर्विकार एव परमात्मा प्रकृतिं प्रकर्षेण कृतिः सृष्ट्यादिक्रिया यस्याः सकाशात्सा मम प्रकृतिस्त्रिगुणात्मिका दैवी माया मायान्तु प्रकृतिं विद्यादिति श्रुतेः तां प्रकृतिं स्वां स्वकीयां कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इतिश्रुतेः स्वस्योपाधिभूतामव्यक्तसंज्ञिकां मूलप्रकृतिमधिष्ठाय तस्यां तत्कार्ये चाऽहं ममेति भावनां कृत्वा योऽहमजत्वादिलक्षणः सोऽहं सम्भवाम्यात्ममायया आत्माधीना मायाऽऽत्ममाया तया सम्भवामि स्वेच्छाविर्भूतशुद्धसत्वात्मकमूर्तिमान्भवामि । तदुक्तम्—

सतो हि मायया जन्म जायते न तु तत्वतः ।

असतो मायया जन्म तत्त्वतो न हि युज्यते ॥
वंध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते ॥

इति । यद्वा भानोः प्रभावद्वन्हेर्दग्धृत्वशक्तिवदात्मनो ममाभिन्ना माया-ऽऽत्ममाया न तु मद्व्यतिरिक्ता देवात्मशक्तिं स्वगुणैर्निगूढामितिश्रुतेः । अन्यथा त्वद्वैतहानिरेकमेवाद्वितीयमितिश्रुतिविरोधश्च स्यादतो वन्हेर्दहनशक्तिवदभिन्नैव सा प्रकृतिशब्दिता माया तयैवाहं जन्मवान्न तु वस्तुतस्तथात्वं निष्कलं निष्क्रियमिति न जायते म्रियते वा विपश्चिदिति च श्रुतेर्विरोधापत्तेस्ततो माययैवाहं देवादिषु संभवामीत्यर्थः एवं तत्पदार्थस्येश्वरस्य जन्मादेर्मायिकत्वे बोधिते त्वंपदार्थस्य जीवस्यापि तदभिन्नत्वाज्जन्मकर्माद्याविद्यकमेवेति सूचितं भवति ।

अन्ये तु इत्थं योजयन्ति । तथाहि नन्वीश्वरस्य तव सर्वज्ञत्वादतीतानेकजन्मज्ञानसम्भवेप्यतीतानेकजन्मवत्वं न सम्भवति तन्निमित्तधर्माधर्मासम्भवाज्जन्ममात्रस्यैवायुक्तत्वादिति चेन्न स्वधर्माद्यधीनजन्माभावेपि स्वमायया जन्मसम्भवादित्याह अजोपीति । अजोऽपि धर्माधर्माधीनापूर्वदेहेन्द्रियादिसंबन्धरूपजन्मरहितोऽपि सन् पूर्वगृहीतदेहेन्द्रियादिवियोगो व्ययस्तद्रहित आत्मा स्वरूपं यस्य सः । यद्वाऽव्ययात्माऽक्षीणज्ञानशक्तिस्वभावस्तादृशोपि सन् भूतानां भवनधर्माणां सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानामीश्वरोपीशनशीलोऽपि सन्निति जन्महेतुधर्माधर्मादि वारयति । कथं तर्हि देहग्रहणमित्यत्रोत्तरमाह प्रकृतिं स्वामधिष्ठाय सम्भवामि प्रकृतिं मायाख्यां विचित्रानेकशक्तिमघटमानघटनापटीयसीं त्रिगुणात्मिकां स्वां स्वोपाधिभूतां न तु स्वरूपभूतां मदधीनां न तु स्वतन्त्रां सर्वजनव्यामोहहेतुभूतामधिष्ठाय स्वाभासेन वशीकृत्य सम्भवामि तत्परिणामविशेषैरेव देहवानिव जात इव च भवामि न तु जीवानामिव कर्माधीनो मम भौतिको देहः किन्तु अनादिमायैव मदुपाधिभूता यावत्कालस्थायित्वेन च नित्या जगत्कारणत्वापादिका मदिच्छयैव प्रवर्तमाना विशुद्धसत्वरूपेण मम मूर्तिः आकाशशरीरं ब्रह्मेति श्रुतेः आकाशोऽत्राव्याकृतं आकाश एव तदोतं च प्रोतं चेत्यादौ तथा दर्शनात् तद्विशिष्टस्य च ममाव्ययत्वमीश्वरत्वं चोपपन्नम् अतोऽनेन नित्येनैव देहेन विवस्वन्तं च त्वां च प्रतीमं योगमुपदिष्टवानहमित्युपपन्नम् । तर्हि भौतिकविग्रहाभावात्तद्धर्ममनुष्यत्वादिप्रतीतिः कथमिति चेत्तत्राह आत्ममाययेति । मन्माययैव मयि मनुष्यत्वादिप्रतीतिर्लोकानुग्रहाय न तु वस्तुवृत्त्येतिभावः ।

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसि ॥

इति मोक्षधर्मोक्तेः सर्वभूतगुणैर्युक्तं कारणोपाधिं मां चर्म्मचक्षुषा द्रष्टुं नार्हसीत्यर्थः । एतेनास्मदादेरिव तवापि जन्मादिविषये वस्तुत्वाभिमानः स्यादिति निरस्तम् । सर्वदैवानावृतस्वरूपविज्ञानवत्वान्मम लोकस्य त्वावृतस्वरूपज्ञानवत्वाज्जन्मादिविषये तदभिमानः सम्भवति । उक्तं च भाष्यकारैः 'स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिस्सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं मायां प्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वल्लक्ष्यते स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षयेति' । तद्व्याख्यातृभिश्चोक्तं स्वेच्छाविनिर्मितेन मायामयेन दिव्येन रूपेण सम्बभूवेति । नित्यो यः कारणोपाधिर्मायाख्यो नेकशक्तिमान् स एव भगवद्देह इत्याचार्यमतम् । अपरे तु परमेश्वरे देहदेहिभावो नास्ति किन्तु य एव नित्यो विभुः सच्चिदानन्दघनः परिपूर्णो निर्गुणः परमात्मा स एव तद्विग्रहो नान्यः कश्चिद्भूतभौतिको मायिको वेत्याहुः । तन्मते योजनात्वेवं वस्तुगत्या जन्मविनाशरहितः सर्वभासकस्सर्वकारणमायाधिष्ठानत्वेन सर्वभूतेश्वरोऽपि सन्नहं प्रकृतिं स्वभावं सच्चिदानन्दघनैकरसं, मायां निवारयति स्वामिति निजस्वरूपमित्यर्थः स्वस्वरूपमधिष्ठाय स्वरूपावस्थित एव सन्संभवामि देहदेहिभावं विनैव देहिवद्व्यवहरामीत्यर्थः । कथं तर्ह्यदेहे सच्चिदानन्दघने देहत्वप्रतीतिरतआह आत्ममाययेति । निर्गुणे शुद्धे सच्चिदानन्दरसघने मयि भगवति वासुदेवे देहदेहिभावशून्ये तद्रूपेण प्रतीतिर्मायामात्रमित्यर्थः ॥ ६ ॥

एवं सर्वज्ञः सर्वेश्वरोऽशरीरी कदा किमर्थं वा देहवानिव जात इव प्रतीयसे त्वामित्यत्राह—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥**

यदेति । हे भारत हि यस्माद्यदा यदा धर्मस्य वेदविहितस्याभ्युदयनिःश्रेयससाधनस्य प्रवृत्तिनिवृत्तिलक्षणस्य ग्लानिर्हानिर्विघ्नकारिभिर्निर्विशेषविच्छित्तिर्भवति । न केवलधर्महानिर्भगवतो मायाविग्रहस्य ग्रहणे हेतुरपि वधर्म्मप्रवृत्तिरपत्याह । अभ्युत्थानमिति । यदा अधर्मस्य वेदनिषिद्धस्याने-

कदुःखसाधनस्य धर्मविरोधिनोऽभ्युत्थानमुद्भवस्तदातदा आत्मानं देहं मायामयं धर्माधर्मयोस्तद्वतां चानुग्रहनिग्रहयोग्यं सृजाम्यहं देहवान्भवामीत्यर्थः। भरतवंशोद्भवत्वेन धर्महानिं कर्तुमयोग्योसीति वा त्वमपि धर्मसंस्थापनार्थाय भरतवंशेऽवतीर्णोसीति वा सम्बोधनाशयः॥ ७॥

अवतारप्रयोजनमाह—

**परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**

**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥ ८॥**

परित्राणायेति। धर्महान्या हीयमानानां साधूनां वेदमार्गनिष्ठानां परितः सर्वतो रक्षणाय तथाऽधर्मवृद्ध्या वर्द्धमानानां दुष्कृतां पापकारिणां वेदमार्गविरोधिनां विनाशाय च। यथा साधूनां रक्षणमसाधूनां निग्रहश्च ममावतारस्य फलं तथा फलान्तरमप्यस्तीत्याह धर्मसंस्थापनार्थाय तदर्थं सम्भवामि प्रादुर्भवामि प्रतियुगं तथा च वसुदेवगृहेऽवतीर्णेन श्रीकृष्णेन गीताद्युपदेशेन धर्मस्थापनं पाण्डवादिपरिपालनेन साधुपरित्राणं कंसादिमारणेन दुष्कृतां विनाश इति प्रयोजनत्रयं सम्पादितम् एवं च यथासंभवं कदाचिदेकस्मै कदाचिद्द्वाभ्यां कदाचित्सर्वस्मै प्रयोजनाय भगवदवतरणमिति ध्येयम्।

उक्तमर्थं स्पष्टयति परित्राणायेति। प्राणात्ययेऽपि ये स्वधर्मं न त्यजन्ति त एव साधवस्तेषां स्वधर्मैकशरणानां परित्राणाय तेषां प्रार्थनां विनैवेहपरलोकयोर्विच्छित्तिर्यथा न स्यात्तथा रक्षणं परित्राणं तस्मै एतेन साधुभिरीश्वर एवास्माकं त्रातेति धैर्येण स्वधर्मे स्थातव्यमिति सूचितम्। किंच दुष्कृतां ये तु कायवाङ्मनोभिस्त्रिभिरपि करणैः शास्त्रनिषिद्धमेव कुर्वन्ति नान्यं ते दुष्कृतो जगद्दूषणास्तेषां समूलविनाशाय च धर्मसंस्थापनाय च धर्मस्य सतामभ्युदयनिःश्रेयसहेतोरधर्मन्यक्कारपूर्वकं सर्वैराधिकारिभिर्नियमेन यथाशास्त्रमनुष्ठापनमेव संस्थापनं तस्मै युगे युगे कृतयुगादौ भूयो भूयः सम्भवामि स्वमायया स्वयमेवावतरामीत्यर्थः साधुपरिपालनमसाधुविनाशनं धर्मसंस्थापनं चैतत्त्रितयमेव भगवदवतारस्य प्रयोजनमिति सूचितम्। यज्ञादिधर्मेण संरक्षितेन देवा वर्द्धन्ते वृष्टयश्च ताभिरन्नमन्नेन प्राणिनः सर्वे जीवन्त्यतो धर्मसंरक्षणमात्रेण जगत्सर्वं रक्षितमेव भवतीतिभाव इत्यन्ये॥ ८॥

ईश्वरस्य जन्म मायामयं न वास्तवं तस्यैव च जगत्परिपालनं कर्म नान्यस्येति जानतः श्रेयोऽवाप्तिं दर्शयति—

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**

**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

जन्मेति । हेऽर्जुन मे मम नित्यसिद्धेश्वरस्य जन्म मायिकं लीलयानुकरणं कर्म च धर्मस्थापनेन जगत्परिपालनं दिव्यमप्राकृतमन्यैः कर्तुमशक्यमीश्वरस्यैवासाधारणं एवमजोपि सन्नित्यादिना प्रतिपादितं यो वेत्ति तत्त्वतः मनुष्यत्वभ्रान्त्या कर्माधीनगर्भवासादिरूपमेव तज्जन्म स्वभोगार्थमेव तत्कर्मेति भ्रमं परमार्थतः शुद्धसच्चिदानन्दरूपत्वज्ञानेन निराकृत्याजस्यापि मायया जन्मानुकरणमकर्तुरपि परानुग्रहाय कर्मानुकरणमित्येव यो वेत्ति स आत्मनोपि तत्त्वस्य तदैक्येन स्फुरणाद्देहं त्यक्त्वा पुनर्जन्म नैति न प्राप्नोति किन्तु मामेव सच्चिदानन्दघनं परं ब्रह्मेति प्राप्नोति संसारान्मुच्यते इत्यर्थः । मम जन्मकर्मतत्त्वज्ञानशोधितत्त्वंपदार्थस्तत्पदार्थाभेदं लब्ध्वा मुच्यत इति स्वच्छार्थकेनार्जुनपदेन सूचितम् ।

अन्ये तु दुष्टानां च निग्रहानुग्रहार्थं धर्मसंस्थापनार्थं च विवस्वदादिभ्यो योगोपदेशाय च मायया सम्भावितानि यानि शरीराणि तैर्यानिकर्माणि च कृतानि तान्येतानि च सर्वाणि वस्तुतो ब्रह्ममात्रमेवेति यो विजानाति स मुक्तिं गच्छतीत्याह जन्मेति । इतरानपेक्षया स्वात्मनि स्वयमेव स्वप्रकाशेन दीप्यते प्रकाशते इति दिव्यं निर्विशेषचिदेकरसं परं ब्रह्म तस्मिन् दिवि परे ब्रह्मणि पूर्णानन्दैकघनेऽद्वितीये सर्वाधिष्ठाने प्रतीता या प्रकृतिर्यच्च प्राकृतं मे जन्म शरीरं यच्च तत्कृतं कर्म तदेतत्सर्वं तत्वतोऽध्यात्मदृष्ट्या परिशील्य दिव्यं दिविति क्विबन्तं रूपं तथाच दिवो ब्रह्मण. स्वरूपं दिव्यं चैतन्यं तन्मात्रमेवेत्येवं यो वेत्ति साक्षाद्विजानाति स सर्वस्य ब्रह्ममात्रत्वदर्शी विद्वानिमं विद्वद्देहं त्यक्त्वा पुनर्जन्म नैति न तु पुनर्जायते किन्तु मामेति सच्चिदानन्दैकरसं मां ब्रह्मैव प्राप्नोति विदेहमुक्तिं गच्छतीत्यर्थ इत्याहुः ॥ ९ ॥

मामेतीत्युक्तं स्वस्य सर्वमुक्तप्राप्यतया पुरुषार्थत्वं दर्शयन्नस्य मोक्षमार्गस्याधुनिकत्वशङ्कां वारयति—

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**

**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

वीतेति। राग इदं मे भूयादित्याकारोऽन्तःकरणवृत्तिविशेषः विषयत्यागे तन्नाशे च कथं मे जीवनं स्यादित्याकारस्तद्वृत्तिविशेषः त्रासो भयं विषयप्राप्तौ विघ्नकर्तृषु ताडनाक्रोशनादिकर्तृषु च तदनिष्टप्रवृत्तिहेतुः देहकम्पमनस्तापादिव्यङ्ग्यश्चित्तवृत्तिविशेषः क्रोधः, तत्तत्फलतृष्णा रागो विषयत्यागेन ज्ञानमार्गे कथं जीवितव्यमिति त्रासो भयं विषयोच्छेदकोऽयं ज्ञानमार्गः कथं हितः स्यादिति द्वेषः क्रोध इत्यन्ये। वीता विगता विवेकेन गता रागभयक्रोधाः येभ्यस्ते वीतरागभयक्रोधाः शुद्धसत्वाः अतएव मन्मयाः मां परमानन्दघनं तत्पदार्थं प्रत्यक्साक्षित्वंपदार्थाभेदनापरोक्षीकृतवन्तः अभेदज्ञानेनैव कर्मसमुच्चयं वारयति मामेव परमेश्वरमुपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः। अतएव ज्ञानतपसा पूताः ज्ञानमेव तपस्तेन ज्ञानतपसा परमशुद्धिहेतुनाऽन्यतपोनपेक्षेण पूताः शुद्धा निरस्ताज्ञानतत्कार्यमला जीवन्मुक्ताः सन्तो बहवोऽनेके मद्भावं मद्रूपं शुद्धसच्चिदानन्दघनं विदेहकैवल्यमागताः अज्ञानमात्रापनयेन प्राप्ताइत्यर्थः। मन्मया मदेकचित्ताः मामुपश्रिता एकान्तभक्त्या मामीश्वरं शरणं गताः सन्तः मत्प्रसादलभ्यं यदात्मज्ञानं च तपश्च तत्परिपाकहेतुः स्वधर्मस्तयोर्द्वन्द्वैकवद्भावः तेन पूताः शुद्धा मद्भावं सायुज्यं प्राप्ता; यद्वा ज्ञानमेव तपः सर्वकर्मक्षयहेतुत्वात् तेन पूता जीवन्मुक्ताः सन्तो मद्भावं मद्विषयं भावं रत्याख्यं प्रेमाणमागता इत्यन्ये।

अन्ये तु सर्वं ब्रह्मैवेति सर्वस्य ब्रह्ममात्रत्वदर्शनयोगेन प्राञ्चो बहवो मुक्ता इति योगः प्रोक्तः पुरातन इति यदुक्तं योगस्य प्राक्तनत्वं तत्प्रतिपादयति वीतेति। कथमेतावतैव त्वत्प्राप्तिः स्यादत आह वीतेति वा। भोग्येषूपकारिषु च राग आध्यात्मिकाद्युपद्रवेभ्यो भयं स्वस्यापकारिषु क्रोधस्ते रागभयक्रोधाः वीता तीव्रमुमुक्षया सदसद्विवेकवैराग्याभ्यां विशिष्य निर्गता येषां ते वीतरागभयक्रोधाः ज्ञानतपसा ब्रह्मैवाहमिति साक्षाद्ब्रह्मण्येवाप्रतिबद्धमात्मतत्त्ववेदनं यत्तज्ज्ञानं तदेव तपः मुमुक्षोर्यतेः कर्तव्यं मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तप इति स्मृतेस्तेन ज्ञानतपसा पूताः सम्यग्विनष्टानात्मस्वभावत्वेन शुद्ध आत्मा मनो येषां ते शुद्धात्मानो वामदेवादयो मुमुक्षवः स्वयं सर्वदा मामुपाश्रिताः मामपूर्वमनपरमनन्तरमबाह्यमद्वितीयं परं ब्रह्मैवोपाश्रिता उपश्रयणं नाम सर्वं ब्रह्मैवेति बहिरन्तः सर्वत्र प्रत्यग्दृष्ट्या मदेकत्वदर्शनं तदेव कुर्वन्तः सन्तो मन्मया मदात्मना पूर्ण

भूत्वा देहपातानन्तरं मद्भावं ब्रह्मात्मनावस्थानलक्षणमागता विदेहमुक्तिं प्राप्ता इत्यर्थ इत्याहुः ॥ १० ॥

ननु सर्वे प्राणिनः सुधाब्धाविव त्वय्येवाद्वितीये परे ब्रह्मणि तिष्ठन्ति त्वदावासस्य सर्वसमत्वे केभ्यश्चिदेव मुक्तिं प्रयच्छसि न तु सर्वेभ्यः कस्तवायं पक्षपातइत्याशङ्कायां न सुधाब्धिवासस्य सर्वसमत्वेऽपि पीतसुधानामेवामरत्वं न त्वितरेषां यथा तथैव मय्यवस्थानस्य सर्वसमत्वेऽपि मामकं परं भावं ये भजन्ति तेषामेव विमुक्तिर्न त्वपरं भावं भजतां कामिनामिति तं यथायथोपासते तथैव भवन्तीत्येतच्छ्रुत्यर्थमनुसृत्याह—

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**

**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

ये यथेति ।

द्वे रूपे वासुदेवस्य व्यक्तं चाव्यक्तमेव च ।

अव्यक्तं ब्रह्मणो रूपं व्यक्तमेतच्चराचरम् ॥

इतिस्मृतेरव्यक्तं निर्विशेषं परं ब्रह्म व्यक्तं तु मायोपाधिकमपरं ब्रह्म सकार्यमेवं व्यवस्थितं मत्तत्त्वं शास्त्राचार्योपदेशसंस्कृतस्वस्वप्रज्ञानुरूपेण तत्तद्विज्ञाय परब्रह्मविदांऽवाप्यतत्तत्फलार्थिनो ये जना मामेवं द्वेधा व्यवस्थितं परमात्मानं यथा प्रपद्यन्ते ज्ञानयोगेन वा कर्मयोगेन वाऽप्यन्यथा वा येन प्रकारेणोपासते तान् तत्तत्साधननिष्ठानुपासकान् तथैव यस्मिन्यस्मिन् तत्वे परिनिष्ठिता भवन्ति तत्तद्रूपेणैव प्रत्यक्षीभूय भजाम्यनुगृह्णामि तत्तद्वस्तूपासनानुरूपफलेन योजयामीत्यर्थः। यादृशी भावना यस्य सिद्धिर्भवति तादृशीति नियमात्स्वस्वप्रज्ञाबलेन परिगृहीतवस्तूपासनानुरूपेणैव तेषां फलं सिध्यति नान्यथाऽतो मम न कश्चित्पक्षपात इति भावः। एवं ज्ञानकर्मयोगफलप्रदाने समभावेन मयि स्थिते सत्यपि शास्त्रार्थज्ञास्तदनुसारिणो ये मनुष्या ब्राह्मणादयो मुमुक्षवस्ते सर्वे ममेश्वरस्याभिमतं श्रुतिस्मृतिविहितं वर्त्म मार्गमेवानुवर्तन्ते यद्वा ममेश्वरस्य कृतेर्विषयभूतं कर्ममार्गमनुवर्तन्ते विशिष्य कर्मैव कुर्वन्तीत्यर्थः ॥ ११ ॥

ननु मोक्षस्य सन्निकृष्टकारणं प्रकृष्टं सर्वश्रुतिप्रसिद्धं ज्ञानयोगमुत्सृज्य पण्डिता अपि किं कर्ममार्गमनुतिष्ठन्तीत्याकाङ्क्षायां ज्ञानयोगस्य चित्तशुद्ध्यैकलभ्यत्वात्तदसिद्धौ सर्वं कर्म सन्यस्य ज्ञानयोगे प्रवृत्तस्य ज्ञाननिष्ठासम्भवात्तदसिद्धौ मोक्षासिद्धिस्तेन ज्ञानकर्मफलयोरुभयोरपि भ्रंशः

स्यात्ततो मोक्षस्यादिमं कारणं चित्तशुद्धिरेव सम्पादनीयेति विचक्षणाः कर्मैव कुर्वन्तीत्याशयेनाह—

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

काङ्क्षन्त इति । इहास्मिन् लोके देवता इन्द्राग्न्यादिदेवांस्तत्प्रसादसिद्धये यजन्ते आज्यादिहविषा एधयन्तः पण्डिताः कर्मणां श्रद्धाभक्तिभ्यां नियमेनानुष्ठितानां श्रौतादीनामनुष्ठानेन लब्धां सत्वशुद्धिलक्षणां सिद्धिं काङ्क्षन्तो मम वर्त्मानुवर्तन्ते इति पूर्वेणान्वयः । ननु हठादियोगैरपि धीशुद्धेः सम्पादयितुं शक्यत्वात्किं कर्मणेत्याशङ्कायां न तेषां दुःसाध्यत्वात्कृतैरपि तैश्चित्तशुद्धिसिद्धेर्बहुकालभाव्यत्वाच्चावश्यं मुमुक्षुणा कर्मैव कर्तव्यमित्याशयेनाह क्षिप्रमिति । हि यस्मात्कारणान्मानुषे लोके कर्मभूमौ कर्मजा वैदिककर्मानुष्ठाननिष्पन्ना सिद्धिश्चित्तशुद्धिलक्षणा क्षिप्रं शीघ्रमेव भवति यज्ञैराराधितानां देवानां प्रसादाच्छीघ्रमेव मनः प्रसीदतीत्यर्थः ।

अन्ये तु इदं द्वयमित्थं योजयन्ति । तथाहि ननु पूर्वोक्तविशेषणविशिष्टेभ्य एव मोक्षं प्रयच्छसि चेत् न त्वन्येभ्यस्तद्रहितेभ्यः सकामेभ्यस्तर्हि तव वैषम्यादिहेतुरागादिमत्वादनीश्वरत्वापत्तिरित्याशङ्क्यां ये मुमुक्षवस्तेभ्यो ज्ञानसम्पादनद्वारा मोक्षं प्रयच्छामि फलान्तरार्थिभ्यस्तु तदुपायानुष्ठापनेन तदेव ददामीति न मम रागद्वेषाविति परिहरति य इति । ये आर्ता अर्थार्थिनो जिज्ञासवो ज्ञानिनश्च यथा येन प्रकारेण आर्तिनिवृत्त्यर्थतयाऽर्थार्थतया ज्ञानार्थतया मोक्षार्थतया च मामीश्वरं सर्वफलदातारं प्रपद्यन्ते भजन्ति तानहं तथैव तदपेक्षितफलदानेन च भजाम्यनुगृह्णामि तत्रार्तानार्तिहरणेनार्थार्थिनोऽर्थदानेन जिज्ञासून् ज्ञानदानेन ज्ञानिनो मोक्षदानेन चानुगृह्णामि न त्वन्यकामायान्यद्ददामीत्यर्थः । ननु तथापि स्वभक्तानामेव फलं ददासि न त्वन्यदेवभक्तानामिति तव वैषम्यं स्यादेवेति नेत्याह ममेति । नन्विन्द्रादीनपि बहवो भजन्त्येव तेऽपि तेभ्यो भक्तेभ्यस्तत्तत्फलं ददत्येव कुतस्त्वमेव भजनीयस्त्वमेव च फलदातेत्याशङ्क्याह ममेति वा । हे पार्थ मनुष्याः कर्माधिकारिणः सर्वप्रकारेण इन्द्राद्यनुवर्तनेनापि मम सर्वात्मनो वासुदेवस्य वर्त्म भजनमार्गं कर्मज्ञानलक्षणमनुवर्तन्ते तथाच तत्तद्देवतात्मनाऽहमेवावस्थितःसन्भजनीयोऽहमेव च तत्तद्देवताभक्तेभ्यस्तत्तत्फलं ददामि न त्वन्यः कश्चित्फलदातेत्यर्थः । इन्द्रं मित्रं वरुणमग्निमाहुरित्यादिमान्त्रवर्णात् फलमत उपपत्तेरिति न्यायाच्च ॥११॥

यदि त्वमेवाप्रतिहतज्ञानेच्छाक्रियाशक्तिमान् रागद्वेषादिशून्यत्वात्सर्व समः सर्वकर्मफलदाता तर्हि सर्वेऽपि प्राणिनः फल्गुफलादभ्युदयाद्विरक्ताः सन्तो मोक्षमेवापेक्षमाणाः त्वामेव भगवन्तं सर्वफलदानसमर्थं कुतो न भजन्तीति चेत्तत्राह काङ्क्षन्त इति । इह लोके कर्मणां सिद्धिं फलनिष्पत्तिं कांक्षन्तोभीप्सन्तो देवता इन्द्रादीन्यजन्ते पूजयन्ति अज्ञानप्रतिहतविवेकज्ञानत्वान्न तु निष्कामाः सन्तो मामिति शेषः । कर्मफलसिद्धिमिच्छतां कुतो मनुष्यलोके देवतापूजनमिष्यते तत्राह क्षिप्रं हीति । हि यस्मादिन्द्रादियाजिनां तत्फलार्थिनां कर्मजा सिद्धिः कर्मजन्यं फलं मनुष्यलोके क्षिप्रं शीघ्रमेव भवति ज्ञानफलं तु चित्तशुद्ध्यपेक्षत्वान्न शीघ्रं भवतीत्यर्थः । मानुषे लोके कर्मफलं शीघ्रं भवतीत्यनेनान्यलोकेपि वर्णाश्रमधर्मव्यतिरिक्तकर्मफलसिद्धिर्भगवता सूचिता । नन्वन्यलोके विलम्बेन कर्मफलमत्र त्वविलम्बेनेति विभागे को हेतुरिति चेद्वर्णाश्रमप्रयुक्तकर्माधिकारभावाभावाविति गृहाण । यतः कर्मप्रयुक्तं फलं मानुषे लोके झटिति सिद्ध्यत्यतस्तत्तत्क्षुद्रफलसिद्धिकामाः ज्ञानमार्गविमुखा अन्यदेवता यजन्ते न प्रायेण मुमुक्षव इव मां साक्षात्ते भजन्तीति भावः ॥ १२ ॥

कस्मात्पुनः कारणात्त्वैव वर्त्मानुवर्तन्ते नान्यस्येत्यत आह । यद्वा मानुष एव लोके वर्णाश्रमकर्माधिकारो नान्येष्विति नियमः किं निमित्त इति चेत्तत्राह । यद्वा शरीरारम्भकगुणवैषम्यादपि न सर्वे समानस्वभावा अतोऽपि न सर्वे मामेव भजन्ते इत्याह—

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

चातुर्वर्ण्यमिति । चत्वारो वर्णा एव चातुर्वर्ण्यं मयेश्वरेण सृष्टं उत्पादितं 'ब्राह्मणो ऽस्य मुखमासीदिति' श्रुतेः । गुणकर्मविभागशः गुणाः सत्त्वादयः कर्माणि शमादीनि तयोर्विभागशः द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते इत्युक्तेः गुणविभागेन कर्मभागेन चेत्यर्थः । तथाहि सत्त्वप्रधाना ब्राह्मणास्तेषां सात्विकानि शमदमादीनि कर्माणि सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियास्तेषां च शौर्यतेजःप्रभृतीनि कर्माणि तमउपसर्जनरजःप्रधाना वैश्यास्तेषां च कृष्यादीनि कर्माणि तमःप्रधानाः शूद्रास्तेषां च तामसानि त्रैवर्णिकशुश्रूषादीनि कर्माणीति मानुषे लोके व्यवस्था तथा च मनुष्यलोके परं वर्णाश्रमादिपूर्वके कर्मण्यधिकारस्तत्रैव वर्णादेरीश्वरेण

सृष्टत्वात् लोकान्तरेषु तत्र वर्णाद्यभावादीश्वरमेव चतुर्वर्णाश्रमादिविभाग-भागिनोऽधिकारिणोनुवर्तन्ते तेनैव वर्णादेस्तद्व्यापारस्य च सृष्टत्वात्तदनुवर्तनस्य युक्तत्वादिति प्रश्नद्वयसमाधानं बोध्यम् । तृतीयस्य तु स्पष्टमेव ।

परेतु चतुर्णां वर्णानां हितं चातुर्वर्ण्यं गुणाश्च कर्माणि चेति गुणकर्म द्वन्द्वैकवद्भावः कर्माण्यग्निहोत्रादीनि गुणाश्च द्रव्यदेवतारूपाः विभागशः साधारणासाधारणविभागेन तथाहि दानजपादिकं सर्वसाधारणमग्निहोत्रादिकं त्रैवर्णिकस्यैव न शूद्रस्य राजसूयादिकं राज्ञ एव नेतरेषामिति विभागो दृश्यते यतश्चातुर्वर्ण्यं गुणकर्म च मया सृष्टं ततोन्यदेवतानामपि मदुत्थत्वात्पुत्रप्रीत्या पितुरिव तत्प्रीत्या ममैव तृप्तिरस्तीति भाव इत्याहुः ।

एवं तर्हि चातुर्वर्ण्यस्य विषमस्वभावस्य सृष्ट्यादेस्तन्निष्ठव्यापारस्य च स्रष्टृत्वात्तव वैषम्यादेः कर्मफलस्य कर्तृगामित्वाद्भोक्तृत्वादेश्च त्वयि प्रसङ्गात्संसारित्वादिकं ते स्यान्न नित्यमुक्तत्वादिकमित्याशङ्क्याह तस्येति । तस्य विषमस्वभावस्य चातुर्वर्ण्यस्य व्यवहारदृष्ट्या कर्तारमपि मां परमार्थदृष्ट्या अकर्तारं विद्धि अव्ययं निरहङ्कारत्वेनाक्षीणमहिमानमसंसारिणमित्यर्थः । तथा च मायया कर्तृत्वस्य स्वरूपतोऽकर्तृत्वस्य च संभवान्नित्यमुक्तत्वादिकं कर्मतत्फलसम्बन्धवैधुर्यं च सिद्ध्यतीति भावः ॥१३॥

वस्तुतः कर्तृत्वभोक्तृत्वाद्यभावात्कर्मतत्फलसम्बन्धशून्यमीश्वरं पश्यतो दर्शनानुरूपं फलं दर्शयति—

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥१४॥**

न मामिति । येषां कर्मणां विश्वसर्गादीनां भक्तपरिपालनदुष्टनिग्रहादीनां चाहं कर्त्ता तवाभिमतस्तानि कर्माणि मां भगवन्तं वासुदेवं न लिम्पन्ति देहारम्भकत्वेन न बध्नन्ति निरहङ्कारत्वेन कर्तृत्वाभिनिवेशाभावात् । एवं कर्तृत्वं निराकृत्य कर्मफलासक्त्यभावाद्भोक्तृत्वं निराकरोति न मे इति । मे ममाप्तकामस्य न, कर्मफले स्पृहा तृष्णा आसक्तिः आप्तकामस्य का स्पृहेति श्रुतेः । ईश्वरस्य तव कर्मलेपाभावेऽपि मादृशस्य जनस्य किमायातमित्याशङ्क्याह इतीति । कर्तृत्वाभिनिवेशफलासक्तिभ्यां हि कर्माणि बध्नन्ति तदभावान्न मां कर्माणि बध्नन्तीत्येवं योऽन्योपि मामकर्तारमभोक्तारं चात्मत्वे-

नभिजानाति कर्तृत्वभोक्तृत्वादिरहितोऽसङ्गोऽद्वितीयः परमात्माहमस्मीति स्वभेदेन साक्षात्करोति स अकर्त्रभोक्त्रात्मज्ञानवान् कर्मभिर्न बध्यते देहादिसंबन्धं प्राप्य न संसरतीत्यर्थः। तस्यापि कर्माणि देहाद्यारम्भकत्वेन न बन्धकानि भवन्तीति भावः।

अन्ये तु इदं द्वयमित्थं योजयन्ति तथाहि मम वर्त्मानुवर्तन्त इत्यत्र मत्कर्मविषयभूतं कर्ममार्गमनुवर्तन्त इति यदुक्तं तद्विस्पष्टयति चातुर्वर्ण्यमिति। गुणकर्मविभागशः गुणानां सत्त्वादीनां कर्मणां शमादीनां च विभागेन रजउपसर्जनसत्त्वप्रधानस्य ब्राह्मणस्य शमदमादयः कर्माणि सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजोधृत्यादयः कर्माणि तमउपसर्जनरजःप्रधानवैश्यस्य कृष्यादीनि कर्माणि रजउपसर्जनतमःप्रधानस्य शूद्रस्य परिचर्यात्मकं कर्म एवं गुणकर्मविभागशश्चातुर्वर्ण्यं चत्वारो वर्णा एव चातुर्वर्ण्यं चातुराश्रम्यं च सर्गादौ मया सृष्टमत एव मम वर्त्मानुवर्तन्ते इति यदुक्तं तत्सिद्धं तर्हि यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यत इति श्रुतेस्तवापि चातुर्वर्ण्यसृष्टिकर्मकर्तुस्तत्फलेन जन्मादिना सम्बन्धसम्भवान्न नित्यत्वेश्वरत्वादिः सिद्ध्यतीत्याशङ्कायां न विकल्पो न हि वस्तुमायामात्रमिदं द्वैतमितिश्रुतेः स्रष्टृसृष्ट्यादेर्मायिकत्वेन मिथ्यात्वान्निष्कलस्य निष्क्रियस्याविक्रियस्य मम सर्जनादिक्रियाऽयोगात् वस्तुतो मामकर्तारमेव विजानीहीत्याह तस्येति। तस्य चातुर्वर्ण्यस्य प्रपञ्चस्य च मायया कर्तारमपि मायामोहितचित्तानां कर्तृवत्प्रतीयमानं मां परमात्मानमकर्तारं निर्गुणत्वाद्वस्तुतः कर्तृत्वादिधर्मशून्यमेव विद्धि। तदभावे कर्मासम्भूतौ तत्फलजन्माद्यसम्भवादव्ययं नाशरहितं नित्यशुद्धबुद्धमुक्तस्वभावमेव विजानीहीत्यर्थः।

अपरे तु अथ वैषम्यदोषपरिहारार्थमाह चतुर्णां वर्णानां भावश्चातुर्वर्ण्यं ब्रह्मक्षत्रविट्शूद्ररूपं गुणाः सत्त्वादयः कर्म वर्णाश्रमोचितं तद्विभागेन तत्तद्वर्णोचितेन मयैव विराड्रूपेण सृष्टं निर्मितं तस्य चातुर्वर्ण्यस्य विराड्रूपेणैव कर्तारं मां विजानीहि तथाऽव्ययमक्षरं शुद्धस्वरूपमसङ्गमकर्तारं विद्धि। अत्रार्थे शातपथी श्रुतिः तदेतद्ब्रह्म क्षत्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्र इति। भाष्यम् ब्रह्म क्षत्रं विट् शूद्र इति यच्चातुर्वर्ण्यं तदेतत् तत् किं? तत् तेषु अग्निना वैश्वानरापरपर्यायेण विराड्रूपेण सम-

ष्टिना देवेषु ब्रह्माभवत् स एव मनुष्येषु व्यष्टिरूपेण ब्राह्मणोऽभवत् तथा देवेष्वष्टविधेनेन्द्रवरुणादिना क्षत्रियेण मनुष्येषु क्षत्रियोऽभवत् तथा देवेषु षड्विधेन वसुरुद्रादित्यादिना वैश्येन मनुष्येषु वैश्योऽभवत् तथा देवेष्वेकविधेन पूषसंज्ञकेन शूद्रेण मनुष्येषु शूद्रोऽभवत्। तथा ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृत इत्याद्यपि परस्य ब्रह्मणो ममोपाधिद्वयं माया-कार्यं च स्वस्य कूटस्थासङ्गचिद्रूपेण मायातत्कार्यसम्बन्धासम्भवान्मया-कर्तृकैः सृष्ट्यादिकर्मभिः श्लेषो यथा नास्ति तथा प्रत्यग्रूपस्य ममात्मत्वे-न देहेन्द्रियादिकृतकर्मभिरपि श्लेषो नास्त्येव कर्तृत्वभोक्तृत्वादिधर्मशून्यं मां परमात्मानं श्रवणमननादिसंजातविज्ञानबलेन यः स्वात्मत्वेन विज्ञाय कर्माणि प्रवर्तते स कर्मभिर्न बध्यते इत्याह नेति। कूटस्थासङ्गचिद्रूपत्वेन बुद्ध्यादिस-म्बन्धशून्यस्य मे प्रत्यगात्मनः कर्मफले कर्मसु तज्जन्यफलेषु च न स्पृहाऽस्ति स्पृहाया बुद्धिधर्मत्वाद्बुद्ध्यादिसाक्षिणोऽविकारिणो मम तद्धर्मायोगात् कर्म-फलेच्छा सम्भवत्यत एव न मां कर्माणि लिम्पन्ति स यथा कामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुत इति कामिन एव कर्म-सङ्कल्पतदारम्भश्रवणात्कर्मफलेच्छुनैव विज्ञानं यज्ञं तनुत इतिश्रुत्युक्त-विज्ञानात्मना कर्माणि क्रियन्ते न त्वकामिना अक्रियेण मयाऽतो न बुद्ध्या-दिभिः कृतानि कर्माणि मामकर्तारं कर्मतत्कर्तृसाक्षिणं लिम्पन्ति स्पृश-न्ति येन फलेच्छुना यत्कर्म क्रियते स तेन कर्मणा लिप्यते तैलकर्तृवन्मा-न्यस्ततो बुद्ध्यादेः कर्मकर्तुरन्यस्य बुद्ध्यादिकृतकर्माणि लेपाय न भव-न्तीत्येवं कर्मफलेच्छारहितं कर्मणामकर्तारमभोक्तारं चाकाशवत्सर्वगतम-सङ्गमविक्रियं बुद्धितद्धर्मतत्कर्मतदवस्थासाक्षिणं मां परमात्मानं स्वतत्त्वं योऽभिजानाति सम्यगाभिमुख्येनायमेवाहमस्मीति साक्षात्स्वात्मना यो वेत्ति स विद्वानधिकारिको लोकसङ्ग्रहार्थं कृतैः कर्मभिर्न बध्यते कृतानि कर्माण्यमुष्य देहारम्भकाणि न भवन्तीत्यर्थः ॥ १४ ॥

तव कर्मतत्फलसम्बन्धाभावे तथा ज्ञानवतश्च तदसम्बन्धे ममापि किं कर्मणेत्याशंक्य कर्मणि कर्तृत्वाभिमानं तत्फले तृष्णां च त्यक्त्वा मुमु-क्षुवत्त्वया कर्म कर्तव्यमेवेत्याह—

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

एवमिति । पूर्वैरतीतैरप्यास्मिन्युगे ययातिप्रभृतिभिर्मुमुक्षुभिरेवं ज्ञात्वा नाहं कर्ता न मे कर्मफले स्पृहेत्येवं बुध्वा कर्म कृतं यस्मात्पूर्वैरपि कृतं तस्मात्त्वमपि तन्मार्गानुसारेण कर्मैव कुरु न तूष्णीमासनं नापि संन्यासम् । यद्यतत्त्वज्ञस्तदा चित्तशुद्ध्यर्थं तत्त्वज्ञश्चेल्लोकसङ्ग्रहार्थं पूर्वैर्जनकादिभिः पूर्वतरमातपूर्वयुगान्तरेपि कृतं नाधुनातनं कृतं निर्मितं तथा चास्मिन्युगेऽन्ययुगे च पूर्वं पूर्वतरैः कृतत्वादवश्यं त्वया कर्तव्यं कर्मेति भावः ।

विदुष उपाधिकृतानां कर्मणामबन्धकत्वज्ञानमेव परार्थप्रवृत्तौ बलवत्साधनमिति सूचयित्वा प्राञ्चोप्यबन्धकत्वज्ञानेनैव परार्थं प्रवृत्ता इति शिष्टाचारं प्रमाणयन् त्वयाप्येवं प्रवर्तितव्यमित्याह एवं ज्ञात्वेति । अहं बुध्यादिसाक्षी प्रत्यगेवास्मि देहेन्द्रियादिभ्यो भिन्नः सन्देहेन्द्रियकृतैः कर्मभिर्न बद्ध इत्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वं देहादिकृतकर्मणामबन्धकत्वं चैवमुक्तरीत्या विज्ञाय मुमुक्षुभिर्मुक्तैर्मुमोचयिषुभिरितीदं गर्भितणिजन्तं रूपं अविद्याबन्धेभ्यो मोचयितुमिच्छद्भिर्मुमुक्षुभिः पूर्वैरपि जनकादिभिर्लोकहितार्थं कर्म कृतं यस्मात्तस्मात्त्वं पूर्वैः कृतं ज्ञानवृद्धैरनुष्ठितं पूर्वतरमनादिकालप्रवृत्तं कर्मैव लोकहितार्थं कुरु न तु संन्यासमित्यर्थ इत्यन्ये ॥१५॥

कर्मविषये कश्चित्संशयोप्यस्ति किं येन पूर्वैः पूर्वतरं कृतमित्यातिनिर्बन्धेन कर्तृकर्मविशेषणं ददासीति चेदस्त्येवातस्तद्विशेषणदाने यथा पूर्वैः कृतं तथा मयापि कर्तव्यमिति निश्चित्य तत्र तव प्रवृत्तिः सुकरा स्यादतो विशेषणं सफलमित्यभिप्रेत्य कर्मणो दुर्ज्ञेयत्वमाह—

**किं कर्म किमकर्मेति कवयोप्यत्र मोहिताः ।**

**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

किं कर्मेति । किं परमार्थतः कर्म किं वा परमार्थतोकर्मेत्येवमत्रास्मिन्कर्मविषये कवयो मेधाविनोऽपि मोहिताः मोहं निर्णयासामर्थ्यं प्राप्ता. अत्यन्तदुर्निरूपत्वात्तयोः नौस्थस्य निष्क्रियेष्वपि वृक्षेषु गमनभ्रमदर्शनात् दूराच्चक्षुःसन्निकृष्टेषु गच्छत्स्वपि पुरुषेष्वगमनभ्रमदर्शनाच्च दुर्विज्ञेयत्वं तयोरित्यर्थः । तत्तस्मात्ते तुभ्यमहं कर्माकर्म च प्रवक्ष्यामि प्रकर्षेण संदेहोच्छेदेन वक्ष्यामि यत्कर्माकर्मस्वरूपं ज्ञात्वा मोक्ष्यसे मुक्तो भविष्यस्यशुभात्संसारबन्धनादित्यर्थः । तत्ते कर्मेत्यत्राकारप्रश्लेषोपि बोध्यः ॥ १६ ॥

ननु सर्वलोके प्रसिद्धत्वादहमेवैतज्जानामि देहेन्द्रियादिव्यापारः कर्म तूष्णीमासनमकर्मेति तत्र किं त्वया वक्तव्यमित्याशङ्क्य दुर्ज्ञेयत्वं दर्शयति—

कर्मणोह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥

कर्मण इति । किं त्वया वक्तव्यमिति नावमन्तव्यं हि यस्मात्कर्मण शास्त्रविहितस्यापि तत्त्वं बोद्धव्यमस्ति विकर्मणश्च प्रतिषिद्धस्य अकर्मणश्च तूष्णींभावस्य च तत्त्वं बोद्धव्यमस्तीति वाक्यत्रयेऽपि तत्त्वमस्तीत्यध्याहारः । कर्मणइत्युपलक्षणं यस्मात्कर्माकर्मविकर्मणां गहना दुर्ज्ञाना गतिस्तत्त्वमित्यर्थः ॥ १७ ॥

किं पुनः कर्मादेस्तत्त्वमित्यपेक्षायां कर्मादेस्तत्त्वं निरूपयन् तत्र तावन्नौस्थस्य तटस्थतरुपर्वतादिषु समारोपितचलनप्रतीतिरिव लोकस्य देहाद्याश्रयं कर्मात्मन्यध्यारोप्याहं कर्ता ममैतत्कर्मास्य फलं मया भोक्तव्यमिति भ्रान्त्या प्रतीतिस्तन्निवृत्त्यर्थं भगवानाह—

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥

कर्मणीति । क्रियते इति कर्म व्यापारमात्रं तस्मिन्कर्मणि देहेन्द्रियादिव्यापारे विहिते प्रतिषिद्धे च अहं करोमीत्यादिकर्तृत्वादिधर्माध्यासेनात्मन्यारोपिते नौस्थेनाचलत्सु तटस्थवृक्षादिषु समारोपिते चलन इवाकर्माकर्त्रात्मस्वरूपविज्ञानेन वस्तुतः कर्माभावं नाहं कर्ता न ममैतत्कर्म नास्य फलं ममाऽपेक्षितमित्येव यः कश्चित्पश्येत् पश्यति तटस्थवृक्षादिष्विव चलनाभावं यथा पूर्वे जनकादयो मुक्ता मुमुक्षवश्च पश्यन्ति स्म तथेत्यर्थः । सूर्यादिषु गच्छत्स्वप्यगमनप्रतीतिरिव देहेन्द्रियादिषु सर्वदा प्रवृत्तिनिवृत्तिरूपव्यापारविशिष्टेषु सत्स्वपि निर्व्यापारस्तूष्णीं सुखमास इति भ्रान्तिप्रतीतिनिराकरणायाह अकर्मणीति । देहेन्द्रियादिषु त्रिगुणमायापरिणामत्वेन सर्वदा सव्यापारेषु सत्स्वपि निर्व्यापारस्तूष्णीं सुखमासे इतिभ्रांत्या समारोपितेऽकर्मणि कर्माभावे दूरस्थचक्षुःसान्निकृष्टपुरुषेषु गच्छत्स्वप्यगमन इव सर्वदा सव्यापारदेहेन्द्रियादिस्वरूपविज्ञानेन वस्तुतः कर्मनिवृत्त्याख्यप्रयत्नरूपं व्यापारं यः पश्यति दूरस्थपुरुषेषु गमनमिव औदासीन्यावस्थायामप्युदासीनोहमास इत्यभिमानस्य कर्मरूपत्वात् स एतादृशो मनुष्येषु मध्ये बुद्धिमान् स युक्तो योगी कृत्स्नकर्मकृत् समस्तकृच्च स इति बुद्धिमत्त्वयोगयुक्तत्वसर्वकर्मकृत्त्वैस्त्रिभिर्धर्मैः स्तूयते । अत्र प्रथमपादेन कर्म-

विकर्मणोस्तत्त्वं कर्मशब्दस्य विहितनिषिद्धपरत्वात् द्वितीयपादेन त्वकर्मणस्तत्त्वं दर्शितमिति बोध्यम् । तत्र त्वं मन्यसे कर्मणो बन्धहेतुत्वात्तूष्णीमेव मया सुखेन स्थातव्यमिति तन्मृषा असति कर्तृत्वाभिमाने विहितस्य प्रतिषिद्धस्य वा कर्मणो बन्धहेतुत्वाभावात् सति च कर्तृत्वाभिमाने तूष्णीमहमास इत्यौदासीन्याभिमानात्मकं यत्कर्म तदपि बन्धहेतुरेव वस्तुतत्त्वापरिज्ञानात् तस्मात्कर्मविकर्माकर्मणामीदृशं तत्त्वं ज्ञात्वा विकर्माकर्मणी परित्यज्य कर्तृत्वाभिमानफलतृष्णात्यागेन विहितं कर्मैव कुर्वित्याशय इति भाष्यकृदनुमतं व्याख्यानम् ।

कर्माणि ज्ञानकर्मणि दृश्ये जडे प्रपञ्चे सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वभ्रमाधिष्ठानमकर्मावेद्यं स्वप्रकाशचैतन्यलक्षणं परं ब्रह्म परमार्थदृष्ट्या यः पश्येत्तथाऽकर्मणि च स्वप्रकाशे पूर्वोक्ते दृग्वस्तुनि कल्पितं कर्म दृश्यं मायामयं न परमार्थं स दृग्दृश्ययोः सम्बन्धानुपपत्तेर्यः पश्यति एवं परस्पराध्यासेऽपि शुद्धं वस्तु यः पश्यति स एव मनुष्येषु मध्ये बुद्धिमान् परमार्थदर्शित्वान्नान्यस्तस्यापरमार्थदर्शित्वात् स च युक्तो बुद्धिसाधनयोगयुक्तान्तःकरणशुद्ध्या एकाग्रचित्तः अतस्स एवान्तःकरणशुद्धिसाधनकृत्स्नकर्मकृदिति वास्तवधर्मैरेव स्तूयते । यस्मादेवं तस्मात्त्वमपि परमार्थवस्तुदर्शी भव तावतैव कृत्स्नकर्मकारित्वोपपत्तेरित्याशयः। अतो यदुक्तं यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति यच्चोक्तं कर्मादीनां तत्त्वं बोद्धव्यमस्तीति स बुद्धिमानित्यादिस्तुतिश्च तत्सर्वं परमार्थदर्शने सङ्गच्छते । अन्यज्ञानेनाशुभात्संसारान्मोक्षानुपपत्तेस्तत्त्वं चान्यत्र बोद्धव्यमस्तीति । न वाऽतज्ज्ञाने बुद्धिमत्त्वमिति युक्तमेव परमार्थदर्शिनां व्याख्यानमित्यन्ये ।

अपरे तु कर्म यज्ञादिकं ससाधनं तस्मिन्नकर्म स्पन्दशून्यं कूटस्थं ब्रह्म यः पश्येत् कर्मतदङ्गेषु ब्रह्मदृष्टिमध्यस्येत् ।

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥

इत्युक्तेः । अन्यथा यत्कुरु तद्यथाचेष्टारूपमवानो गहना कर्मणो गतिः किं तदकर्म यत्कर्मण्यध्यस्यते इत्याकाङ्क्षायां यत्रैतत्कर्म पुण्यपापात्मकं दृश्यते पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति तत्फलं च सुखदुःखादिकं अहं सुखी अहं दुःखीति स प्रत्यक्चेतनोऽकर्म तत्रैवेदं कर्मास्पन्दे स्पन्दात्मकं सर्पः असर्प इवाध्यस्तमिति यः पश्येत् स बुद्धिमानित्यादिना स्तूयते इत्याहुः ॥ १८ ॥

तदेतत्कर्मण्यकर्मदर्शनादिकं स्तुवन् परमार्थवस्तुदर्शिनः कर्तृत्वाद्यभिमानाभावेन कर्मालिप्तत्वं प्रपञ्चयति यस्येत्यारभ्य ब्रह्मकर्मसमाधिनेत्यन्तेन—

**यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥**

यस्य पूर्वोक्तपरमार्थदर्शिनः सर्वे यावन्तो वैदिका लौकिका वा समारभ्यन्त इति समारम्भाः कर्माणि कामः फलेच्छा सङ्कल्पोऽहं करोमीति-कर्तृत्वाभिमानस्ताभ्यां वर्जिताः लोकसङ्ग्रहार्थं वा जीवनमात्रार्थं वा प्रारब्धकर्मवेगाद्वृथाचेष्टारूपा भवन्ति तं कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्निस्तेन ज्ञानाग्निना दग्धानि भस्मीभूतानि कर्माणि शुभाशुभलक्षणानि यस्य तं ज्ञानाग्निदग्धकर्माणं बुधा ब्रह्मविदो वस्तुतः पण्डितमाहुः। परमार्थदर्शी हि पण्डित उच्यते न तु पण्डितत्वेन प्रसिद्धोऽपि वैशेषिकादिर्भ्रान्तत्वादित्यर्थः।

अन्ये तु इदं श्लोकचतुष्टयमित्थं योजयन्ति । ननु कर्मणां बन्धकत्वमेव सिध्यति 'कर्मणा बध्यते जन्तुरिति' स्मृतेरिति चेन्न तत्स्मृतेरविद्वत्कर्तृकर्मविषयकत्वात् 'तं विदित्वा न लिप्यते कर्मणा पापकेनेति' विदुषः कर्मालेपश्रुतेः। कर्माकर्मणोस्तत्त्वं सम्यक् ज्ञात्वा विदुषा क्रियमाणं कर्माकर्मैव तन्न बन्धाय भवत्यविदुषा कृतमकर्मैव कर्म तदेव बन्धाय भवति। तर्हि कर्माकर्मणोर्लक्षणं किमित्याकाङ्क्षायामाह किमिति । श्रुतिस्मृतिभ्यां यद्विहितं तत्कर्म यदविहितं तदकर्मेति केचित्पण्डिता जगुः(१)। वैदिकं स्मार्तं च यत्तत्सर्वं कर्म तत्संन्यासोऽकर्मेत्यपरे(२)। चलनात्मकं कर्माचलनात्मकं तूष्णीमासनमकर्मेत्यन्ये(३)। केचित्तु किं कर्म, किमकर्मेति किं वा कर्मशब्दवाच्यमकर्मशब्दवाच्यं वा किमिति कवयः। सर्वशास्त्रज्ञा अप्यत्र कर्माकर्मतत्त्वनिर्णये मोहिता मूढभावं गतास्तत्त्वं निर्णेतुमसमर्था जाता इत्यर्थः । यत एवं ततः कर्माकर्मस्वरूपमजानते ते तुभ्यं कर्म चाकर्म च प्रवक्ष्यामि तयोर्ल-

(१) मीमांसका इत्यर्थः। तन्मते कर्मण एव मुख्यत्वात् । श्रुत्यादिनिषिद्धस्याविहितस्य वाऽकर्मत्वात् ।

(२) सम्प्रदायविदः ।

(३) नैयायिकाः ।

क्षणमुपदेक्ष्यामि यज्ज्ञात्वा ययोस्तत्त्वं विज्ञायाशुभात्संसारान्मोक्ष्यसे कर्माकर्मणोस्तत्त्वं सम्यग् ज्ञात्वा मुक्तो भविष्यसीत्यर्थः ॥ १६ ॥

नन्वु कर्माकर्मणोरुभयोस्तत्त्वमारुरुक्षोर्ज्ञातव्यं वा किमारूढस्य वेत्याकांक्षायामारुरुक्षोः कर्माकर्मविकर्मणां तत्त्वं सम्यग्ज्ञातव्यमेव तद्बोधस्यैव तस्य दुरवगाहत्वात्तान्येव बोद्धव्यानि प्रयत्नेनास्यात्रैवाधिकारो नात्यत्रेत्याशयेनाह। कर्मणो हीति। मुमुक्षोरारोढुमिच्छतः कर्मणो वर्णाश्रमादेरनुष्ठेयस्य बोद्धव्यमस्ति ज्ञाते सति हि कर्मस्वरूपं यथाशास्त्रं कर्म कर्तुं शक्यते नाज्ञाते शास्त्राणामनेकत्वाच्छास्त्रप्रवर्तकानां बहुविधत्वाच्च देशकालयुगाधिकारिवर्णाश्रमवयोवस्थादिभेदेन सङ्कोचव्याकोचाभ्यां कर्मविधेरनेकरूपत्वाच्च कर्तव्यस्य कर्मणस्तत्त्वं सम्यग्बोद्धव्यमित्यर्थः। विकर्मणोऽनन्तसम्बन्धवता विधिना विहितविपरीततया विधीयमानत्वाद्विकर्म प्रतिषिद्धं निन्दितं कर्म तस्य विकर्मणोऽपि तत्त्वं बोद्धव्यमस्ति ज्ञाते हि निषिद्धांशे यन्निषिद्धं तत्परिहर्तुं शक्यते ततो निरुक्तदेशकालादिभेदेन निषेधस्यापि बहुविधत्वात्तत्त्वं बोद्धव्यमस्तीत्यर्थः। तथैवाकर्मणोऽपि न कर्माकर्म कर्माभावः यस्मात्कर्म न सम्भवति तदकर्मेति वा कर्मसंन्यासस्तस्यापि तत्त्वं बोद्धव्यमस्ति। काम्यकर्मत्यागः निषिद्धकर्मत्यागः कर्मफलत्यागः सर्वकर्मपरित्यागः कर्ममात्रपरित्याग इत्यादिभेदेन संन्यासोऽपि बहुधा भिद्यते ततस्तस्यापि तत्त्वं बोद्धव्यमस्तीत्यर्थः। हि यस्मात्कारणात्कर्मण इति विकर्माकर्मणोरप्युपलक्षणं तथा च कर्माकर्मविकर्मणां त्रयाणामपि गतिरेवं कर्तव्यमिति कर्तव्यतानिश्चितिर्गहना विदुषामपि दुर्ज्ञेया भवत्यत आरुरुक्षोः कर्माकर्मविकर्मणां स्वरूपं शास्त्रत आचार्यतश्च सलक्षणं सरहस्यं च सम्यग्ज्ञातव्यमस्तीत्यर्थः ॥ १७ ॥

नैवैतान्यारूढस्य तु बोद्धव्यानि किन्तु कर्माकर्मणोरेव तत्त्वं बोद्धव्यमशुभमोक्षायेति पूर्वं प्रवक्ष्यामीति यत्प्रतिज्ञातं तदिदानीमुपदिशति कर्मणीति। क्रियते देहेन्द्रियैरेव निर्वर्त्यत इति कर्म लौकिको वैदिकश्च सर्वोऽपि व्यापारस्तस्मिन्कर्मणि चेष्टामात्रे औपाधिके आत्मयाथात्म्यज्ञो विद्वानकर्म कर्माभावं यः पश्येत्तथैवाकर्मणि देहेन्द्रियव्यापारोपरमलक्षणे तूष्णीमवस्थायां कर्म क्रियामेव यः पश्येत्। ननु कर्मण्यकर्मदर्शनं चाकर्मणि कर्मदर्शनं चोभयमपि न सम्भवति प्रत्यक्षविरोधान्न हि कर्माकर्म भवितुमर्हति व्यापारस्य दृश्यमानत्वान्नाप्यकर्म च कर्म भवति स्थाणुवत्तूष्णीं भावस्योपल-

भ्यमानत्वात्। भावे चाभावदर्शनमभावे च भावदर्शनमतिविरुद्धमप्रामाणिकं च भावाभावयोरभावत्वभावत्वासम्भवादिति चेन्न सद्बुद्ध्या विचार्यमाणे दर्शनद्वयोपपत्तेः। तत्कथमिति चेदुच्यते स्वयमकर्मा सन्नेव पुमानन्यकर्मणा कर्मी भवति यथा मेघक्रियया चन्द्रः क्रियावान् यथा चालनक्रिययातपः क्रियावान् तथा देहेन्द्रियादितादात्म्येन देहेन्द्रियादिक्रियया स्वयमक्रियोपि सक्रियो भवत्यखिलो जन्तुस्तथापि ब्रह्मवेत्ता ब्रह्मैवाहमिति ब्रह्मण्येवात्मत्वविज्ञानेन स्वस्य देहादिसंबन्धाभावात्तत्कर्तृकं कर्माकर्मैव पश्यति तत्राहं ममेति स्वत्वाभावात्। न ह्यन्यकर्तृके कर्मण्यन्यस्य स्वत्वमुपपद्यते तदभावाद्देहादिकर्तृकं कर्मास्याकर्मैव भवत्यबन्धकत्वेनाकर्मतुल्यत्वात् तस्मात्तदकर्मैव पश्यतीत्यर्थः। न तु स्वगतं कर्माकर्म पश्यति स्वस्य निरवयवत्वेन क्रियासम्बन्धानुपपत्तेर्यथा वृक्षे चलति सति तत्स्थमाकाशं निष्क्रियं पश्यति यथा मेघेषु धावत्सु चन्द्रं निष्क्रियं पश्यति तथा देहेन्द्रियादिषु स्वच्छन्दं विषयेषु प्रवृत्तेषु सत्सु स्वं निष्क्रियमेव पश्यति विद्वान्। ततो निष्कलं निष्क्रियमित्यादिश्रुतिप्रामाण्यात्कूटस्थासंगचिद्रूपमात्मानमेवात्मत्वेन विजानतो विदुषो देहादिकर्तृके कर्मण्यकर्मदर्शनमुपपद्यत एव। तस्यैतस्य दर्शनस्य विद्वत्प्रत्यक्षत्वादकर्तारं स पश्यतीत्यादिस्मृतिसिद्धत्वाच्च प्रामाण्योपपत्तेः। किं च मूढः स्वास्मिन्देहाद्यध्यस्य तद्व्यापारोपरमं चाहमासे तूष्णीं सुखं न किंचित्करोमि दुःखकरं कर्मेत्यसुखे देहेन्द्रियादिनिरोधे सुखबुद्ध्या तदक्रियमेव पश्यति यथाश्वारूढोऽश्वस्थित्या स्वं स्थितं पश्यति यथा गच्छन्तमेव सूर्यमगच्छन्तं पश्यति न तथा विद्वान् किन्तु तस्मिन् देहादिव्यापारोपरमेप्यकर्मणि कर्मैव पश्यति यथा निरूढांगुलिमुष्टौ बहिःक्रियाभावेप्यन्तरङ्गुलीनां मुकुलीभावसिद्धेः कारणभूतांगुलिनिरोधनक्रिया विद्यते यथा निमीलिते चक्षुषि बहिर्दर्शनक्रियाऽभावेपि पक्ष्मनिरोधनक्रिया विद्यते तथा नाहं किंचित्करोमीति तूष्णीमवस्थायामपि बहिर्देहेन्द्रियादिचलनक्रियाऽभावेप्यन्तर्नाहं किंचित्करोमीति कर्तुराग्रहरूपा मानसी क्रिया विद्यत एव अन्तराग्रहक्रियाऽभावे बहिःपाण्यादिनिरोधायोगान्मनोव्यापारैकमूलत्वात्सर्वार्थसिद्धेरिन्द्रियक्रियासम्भवाच्चेन्द्रियनिरोधक्रिययैव देहो निश्चलस्तिष्ठति तदभावे देहचलनं वेन्द्रियचलनं वा स्यात्ततो मूढदृष्ट्या त्वकर्मणि तूष्णीमवस्थानेऽपि कर्मदर्शनस्य न्यायदृष्टान्तानुभवसिद्धत्वादकर्मणि कर्मदर्शनमविरुद्धं च प्रामाणिकं च। भावे चाभावदर्शनमभावे च भावदर्शन-

मयुक्तमिति यत्तन्न देहचेष्टाया भावत्वेऽप्यबन्धकत्वेनाभावतुल्यत्वात्तत्र कर्माभावदर्शनस्योपयुक्तत्वाद्भावे चाभावदर्शनमुपपद्यते । तूष्णीमवस्थाया-मकर्मण्यप्युक्तरीत्या कर्मदर्शनादकर्मणि कर्मदर्शनं चोपपन्नतरमेवातो न कोऽपि विरोधः । ननु विदुषः कर्मण्यकर्मदर्शनमतीतानागतवर्तमानसर्व-कर्मनिर्मोक्षहेतुत्वेन जन्मादिबन्धनिवर्तकत्वात्कर्तव्यमेव भवति अकर्मणि कर्मदर्शनस्य तु निष्प्रयोजनत्वात् अकर्मणि च कर्म यः पश्येदिति विधिर-नर्थक एवेति चेन्न तस्याप्यकर्मास्पृष्टात्मदर्शनसाधनत्वेन सफलत्वोपपत्तेः निष्क्रियं शान्तमिति निष्क्रियत्वशान्तत्वयोर्ब्रह्मलक्षणत्वश्रवणादत्रापि नि-ष्क्रियत्वशान्तत्वधर्मवति देहेन्द्रियव्यापारोपरमे तूष्णीमवस्थाने स्वरूपभ्रमः स्यात्तन्मा भूदित्युपादिशति अकर्मणि च कर्म य इति । कर्मवदकर्मणोऽप्यौ-पाधिकत्वात्पुरुषतन्त्रत्वाद्दृश्यत्वाद्विचार्यमाणे सक्रियत्वाच्च स्वयमनात्मैव भवति । तद्द्रष्टा यः स एवात्मेति बोद्धव्यमिति सूचयितुमुपादिश्यते अक-र्मणि च कर्म य इति । किंचाकर्मणोऽपि कर्मवत्कर्मत्वज्ञानेन कर्माकर्मणोरु-भयोरप्यनात्मत्वे सिद्धे विदुषस्तूष्णीमवस्थाया अकर्मणो निष्फलत्वात्तद-पेक्षया लोकोपकारकत्वात्कर्मणि प्रवृत्तिः सफलेत्यपि सूचयत्यकर्मणि च कर्म य इत्यतो विधेः सर्वथा साफल्यमस्ति । ननु कर्मण्यकर्मदर्शनमकर्म-णि कर्मदर्शनं चैककर्तृकं न भवति परस्परविरुद्धत्वेन तयोरेकाश्रयत्वायोगा-द्विकल्पो नहि वस्त्विति द्वैतं सर्वं मिथ्यैव पश्यतो विदुषः देहेन्द्रियादेर्मिथ्या-त्वात्तदाश्रितकर्मणोऽपि मिथ्यात्वदर्शनमुक्तं न त्वकर्मणि कर्मदर्शनं युक्तं तस्य देहादिसत्यत्वज्ञानैकसाध्यत्वाद्देहादेः सत्यत्वे खलु तदाश्रितस्याकर्मणः सत्यत्वं कर्मत्वं च सिद्ध्यति तत्सिद्धौ तु कर्मण्यकर्मदर्शनं न सिध्यति तस्य मिथ्यात्वज्ञाननिबन्धनत्वादेवं परस्परविरुद्धयोस्तयोरेकपुरुषाधिकर-णत्वं न सम्भवति कर्मण्यकर्म यः पश्येदकर्मणि च कर्म य इति यच्छब्दद्व-यश्रवणाच्च ततस्तयोर्भिन्नपुरुषाश्रयत्वमेवेति चेन्न विदुष उभयत्र मिथ्या-त्वदर्शनस्यैव विवक्षितत्वाद्यथा देहेन्द्रियादेस्तत्कर्मणोऽपि च मिथ्यात्वं द्रष्टव्यं तथा तद्व्यापारोपरमस्यापि मिथ्यात्वमेव द्रष्टव्यम् । उभयोरप्यविद्याकार्य-भूतदेहाश्रयत्वेनावस्तुत्वाविशेषादन्यथा भेददृष्टेरशुभमोक्षासम्भवात् । यः कर्माकर्मणोरुभयोस्तदाश्रयस्यापि मिथ्यात्वमेव निश्चित्य तदधिष्ठानं परं ब्रह्म निष्कलं निष्क्रियं शान्तमनन्तमखण्डानन्दैकरसमिदमेवाहमिति स्वा-त्मना विज्ञाय तदात्मना तिष्ठति स एवाऽशुभान्मुक्तो भवत्यतोऽन्यथात्मानं पश्यतो न मुक्तिरस्ति । तस्मात्तयोरेकपुरुषाश्रयत्वमेव न त्वनेकपुरुषाश्रयत्वं

यद्वद्वयं तु यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्तीत्यत्र यथा तथा बोधसौकर्यार्थमेव न तु गृहीतृभेदसिद्ध्यर्थं स बुद्धिमानित्येकेनैव तच्छब्देनोपसंहारादेवं कर्मण्यकर्मदर्शनमकर्मणि कर्मदर्शनं यः करोति शास्त्रत आचार्यतो युक्तितोऽनुभूतितश्च स एव मनुष्येष्वधिकृतः सर्वशास्त्रेषु बुद्धिमानात्मतत्त्वज्ञः स एव युक्तो योगी च स एव कृत्स्नकर्मकृत् सर्वेषां श्रौतानां स्मार्तानामितरेषां च पुण्यकर्मणां कर्ता च भवति यथा 'कृता पविजितायाधरे याः संयन्त्येवमेनं तदाभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेदेति' श्रवणात्सर्वाणि सर्वलोकैः कृतानि पुण्यकर्माण्यनेन कृतानि भवन्तीत्यर्थः ।

यद्वा पूर्वोक्तश्लोकस्येत्थं योजना । ननु कर्माकर्मणोस्तत्त्वं सम्यक् ज्ञात्वा मुक्तो भविष्यसीति यदुक्तं तन्न युक्तं तथाहि तमेव विदित्वाऽतिमृत्युमेतीत्यात्मतत्त्वज्ञानादेव मुक्तिः श्रूयते न तु कर्माकर्मणोस्तत्त्वज्ञानादिति चेत्सत्यं आत्मज्ञानादेव मुक्तिस्तथापि तदा विद्वान्पुण्यपापे विधूयेति पुण्यपापविध्वंसनं कृतवत एव विदुषो मुक्तिः श्रूयते ततो मुमुक्षोः कर्मादितत्त्वज्ञानेन जन्मादिहेतुभ्यः कर्मादिभ्यो मोक्तव्यं तदर्थं कर्मादीनां तत्त्वं ज्ञातव्यमित्याह कर्मणोऽपि कर्तव्यत्वेन शास्त्रेणोक्तस्य स्वर्गादिहेतोस्तत्त्वं मुमुक्षोर्बोद्धव्यं । तद्विपरीतस्य दुर्गतिहेतोर्विकर्मणो निषिद्धस्यापि तत्त्वं बोद्धव्य तथैवानर्थहेतोरकर्मणो श्रद्धया विहिताकरणलक्षणस्य तत्त्वं बोद्धव्यं सद्गुरोः । ननु चलनात्मकं कर्मेति चलनमेव कर्मणः स्वरूपं किं तस्य बोद्धव्यमस्तीत्याशङ्कायां कर्माकर्मविकर्मणां तत्त्वं मूढैर्ज्ञातुं न शक्यमित्याह हि यस्मात् कारणात् कर्मण इतीतरयोरप्युपलक्षणं कर्मणो विकर्मणोऽकर्मणश्च गतिस्तत्त्वावगतिर्याथात्म्यवेदनं सद्गुरूपदेशेन विना ज्ञातुं गहना दुर्घटा दुर्लभेत्यर्थः ।

तर्हि तेषां तत्त्वं त्वयैवोपदेष्टव्यं जगद्गुरुणेत्याकांक्षायां कर्माकर्मविकर्मणां चाकाशादिप्रपञ्चस्य सर्वस्यापि तत्त्वं ब्रह्मैव तस्मिन्विदिते सर्वस्यापि तत्त्वं विदितं भवतीति सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि संपश्यन् ब्रह्म परमामित्येतच्छ्रुतिप्रमाणकं परावरैकत्वदर्शनं निःशेषसंसारभ्रमप्रविध्वंसकमुपदिशति कर्मण्यकर्म य इति । कृत् क्रियते सृज्यते इति कर्म ब्रह्मकार्यं महदादिस्थूलान्तं जगत्तस्मिन्कर्मणि सर्वत्र जगत्यकर्म नावेद्यते यत्र कर्म तदकर्म निष्कलं निष्क्रियमिति श्रुतेर्निष्क्रियं परं ब्रह्म यः पश्येत् प्रतीतं प्रपञ्चं सर्वं ब्रह्मैव यः पश्यतीत्यर्थः । ननु सविशेषं जगन्निर्विशेषं परं ब्रह्म

गवाश्ववदेतद्द्वयं परस्परविलक्षणं भवति गामश्वमिव ब्रह्मविलक्षणं विश्वं कथं ब्रह्म पश्यति विद्वानिति चेन्न तयोः कार्यकारणभावापन्नत्वादत्यन्तवैलक्षण्यानुपपत्तेः। गवाश्वयोस्तु कार्यकारणभावाभावाज्जातिभेदाच्च वैलक्षण्यं सम्भवति न तथा जगद्ब्रह्मणोः। ननु नामतो रूपतो गुणतो जातितश्च जगद्भिद्यते निरुक्तभेदस्य प्रत्यक्षत्वादेवं भेदभिन्नं जगत्कथं ब्रह्म पश्यतीति चेन्न नामरूपादेरधिष्ठानाज्ञानकल्पितत्वाद्यथैकस्मिन् तोये तरङ्गफेनबुद्बुदादिभेदकल्पना यथैकस्यामेव भूम्यां गृहक्षेत्रादिभेदकल्पना तथैवैकस्मिन्ब्रह्मणि नामरूपादिभेदकल्पना भ्रममूला न तु वास्तवी यथा द्रवत्वशीतत्वशुक्लत्वमधुरत्वादीनां तोयधर्माणां तरङ्गादिषु बहिरन्तरनुस्यूतत्वाज्जलसत्ताव्यतिरेकेण पृथक्सत्ताभावाच्च तरङ्गादि सर्वं जलमात्रमेव भवति । तथा जगत्यपि बहिरन्तस्सर्वत्राविच्छेदेन सत्त्वचित्त्वादीनां ब्रह्मधर्माणामनुगमदर्शनाद्ब्रह्मसत्ताव्यतिरेकेण पृथक्सत्ताभावाच्च चिद्धीदं सर्वं सद्धीदं सर्वं सर्वं खल्विदं ब्रह्म ब्रह्मैव सर्वमित्यादिश्रुतिभिरिदं सर्वं ब्रह्मैव ब्रह्मकार्यत्वान्मृत्कार्यघटवत् इदं सर्वं ब्रह्मैव ब्रह्मण्यारोपितत्वाच्छुक्तिरजतवदित्यादियुक्तिभिर्मृदादिदृष्टान्तैश्च सम्यग्विचार्यमाणे जगत्सर्वं ब्रह्मैव भवत्यत एव शुद्धात्मब्रह्मवित्सर्वं जगद्ब्रह्मैव पश्यतीत्यर्थः । यद्यपि श्रुतियुक्तिदृष्टान्तानुभवैर्जगतो ब्रह्ममात्रत्वे सिद्धे जगतः कार्यत्वं निवृत्तं तन्निवृत्त्या ब्रह्मणोपि निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायेन कारणत्वं निवृत्तमेव भवति कार्यत्वसापेक्षत्वात्कारणत्वस्य तन्निवृत्तिरेवमुभयनिवृत्त्या तु कार्यकारणभावशून्यमेकमेवाद्वितीयं ब्रह्मेति ब्रह्मणोऽद्वितीयत्वं सिद्धं तथाप्यधुना विचारादद्वितीयत्वं ब्रह्मणः सिद्धं पूर्वं तु जगदिति ब्रह्मेति द्वैतमस्त्येवेत्याशंकायां न पूर्वमपि यथा रज्जुरेव सर्पतच्छिरःपुच्छादिरूपेणाभात् यथा मरुरेव जलतरङ्गफेनादिरूपेणाभात्तथा ब्रह्मैव भ्रांत्या द्रव्यगुणकर्मादिभेदभिन्नजगदात्मना भातं तत् वस्तुतो जगदस्तीति मुमुक्षुणा ब्रह्मणः कालत्रयेप्यद्वितीयत्वसिद्धये ब्रह्मणि तद्विवर्तत्वेन जगत्स्थितमिति द्रष्टव्यमिति व्यतिहारमुखेनोक्तमेव दर्शनं पुनर्दृढयति जगतो ब्रह्ममात्रत्वे निःसंदिग्धत्वायाकर्मणि च कर्म य इति। अकर्मण्युक्तलक्षणे ब्रह्मणि कर्म चोक्तलक्षणं जगद्यः पश्येद्ब्रह्मविवर्तत्वेन स्वतः सत्ताभावाद्रजतं शुक्तिमिव सलिलं मरुमिव च जगत्सर्वं ब्रह्मैव य पश्यतीत्यर्थः। 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेति' श्रुतिर्ब्रह्मणि पृथक्सत्तावत्त्वेन नामरूपादिभेदभिन्नं जगत्पश्यतोऽविदुषोनर्थं ब्रवीति यतस्ततो

नामरूपादिद्वैतदर्शनं भ्रमकल्पितमुत्सृज्य निःश्रेयसार्थिना निःशेषविनष्ट-विपर्ययं यथा तथा नामरूपगुणं कर्म च सर्वं ब्रह्मैवेति(१) सिद्धम्। एव-मसन्दिग्धमविपर्यस्तं सर्वं प्रत्यग्दृष्ट्या ब्रह्मैव यः पश्यति स एव बुद्धिमान्ब्रह्मवेत्ता स एव युक्तो ब्रह्मनिष्ठः स एव कृत्स्नकर्मकृत् कृत्स्नानि सर्वाण्यनेककल्पार्जितानि संचितान्याधुनिकजन्मकृतान्यप्रवृत्तफलानि कर्माणि नानायोनिप्रापकानि स्वयाथात्म्यविज्ञानखड्गेन कृन्तति छिनत्तीति कृत्स्नकर्मकृत् 'सर्वं पाप्मानं तरतीति' श्रुतेरेवं द्रष्टा यः सोऽशुभान्मुक्तो भवतीत्यर्थः।

केचित्तु कर्माणि वेदविहितेनुष्ठीयमाने सत्यकर्म नैष्कर्म्यं पश्येत् तथाकर्मणि नैष्कर्म्ये कर्मैव निमित्तभूतं पश्येत् एवं मिथः कार्यकारणरूपत्वं पश्येत् यः स एव व्यवसायात्मिकबुद्धिमान् स एव कृत्स्नकर्मकृत् मुक्तौ सर्वकर्मफलानामन्तर्भूतत्वादित्यर्थः। अथैवं पश्यतः पुरुषस्य स्वरूपमाह यस्येति पञ्चभिरित्याहुः ॥ १८ ॥

यथा 'पुष्करपलाश आपो न श्लिष्यन्ते' इत्येतछ्रुत्युक्तरीत्या कर्मदर्शनेन शरीरयात्रोपयुक्तानि ज्ञानसमकालानि सर्वाणि कर्माणि यो विश्लेषयति स एव पण्डित इत्याह यस्येति। सम्यग्देहेन्द्रियादिभिरेवारभ्यन्ते क्रियन्त इति समारम्भाः प्राणत्राणोपयोगिनो देहेन्द्रियव्यापाराः सर्वे यस्य ब्रह्मविदः कामसङ्कल्पवर्जिताः कामोऽनेन भवितव्यमितीच्छावेगः सङ्कल्पस्तद्धेतुः सम्यक्त्वबुद्धिस्ताभ्यां वर्जिताः क्षुदादिवत्तत्कालिका भवन्ति तं ज्ञानाग्निदग्धकर्माणं कूटस्थासङ्गचिद्रूप एवाहं न तु कर्ता भोक्ता श्रोता द्रष्टा वक्तेत्यात्मन्येवात्मभावापत्त्या देहतद्धर्मतत्कर्मसु स्वस्यासङ्गत्वदर्शनं तदेवाग्निस्तेन दग्धानि निर्मूलितानि सर्वाणि विहिताविहितादिरूपाणि कर्माण्यौपाधिकानि यस्य तमेव जीवन्मुक्तं महापुरुषं बुधाः शास्त्रज्ञाः पण्डितं प्राहुः। पण्डा कल्याणी सर्वत्र ब्रह्ममात्रावगाहिन्यखण्डात्मिका वृत्तिरस्य संजातेति पण्डितस्तमेव पण्डितं वदन्ति नान्यमित्यर्थः। अत्र कामसंकल्पवर्जिता इत्यनेन 'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमिति' न्यायात्कर्मसु प्रवृत्तेः कारणं कामस्तत्कारणं संकल्प एवारम्भाणां तद्विवर्जितत्वे स्वार्थं वा विदुषः प्रवृत्तिरनुपपन्ना सती शरीरयात्रामात्रावशिष्टा सापि तत्कालिकी तत्रापि कामाद्यभावाद्वेगवर्जिता ज्ञानाग्निनिर्दग्धा च भवतीति सूचितं भवति ॥ १९ ॥

(१) द्रष्टव्यमित्यर्थः।

सर्वं ब्रह्मैव पश्यतो विदुषः स्वार्थो परार्था वा प्रवृत्तिर्न संभवति क्वचिद्वासनयाहारादौ कर्मणि प्रवृत्तोऽपि स्वयमकर्मैव भवतीत्याह—

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोपि नैव किञ्चित्करोति सः ॥ २० ॥**

त्यक्त्वेति। ब्रह्मवित्स्वयं नित्यतृप्तः नित्येनानन्दैकरसेन स्वात्मना साक्षात्कृतेन ब्रह्मणैव तृप्तस्तृप्तिं गतः स्वरूपसुखसम्पन्नस्तत एव निराश्रयः येन ससाधनं कर्म पुमानाश्रयति स आश्रयः कामस्तस्मान्निर्गतो यः स निराश्रयो निष्कामस्तत एव कर्मसु न प्रवर्तते काममूलत्वात्प्रवृत्तेस्तदभावो युक्तः। यदि वासनया भिक्षाटनादौ क्वचित्प्रवर्तते तदा कर्मफलासङ्गं कर्माणि फलन्ति यत्रेति वा कर्माणि फलतीति वा स्वयं कर्मफलत्वाद्वा कर्मफलो देहस्तत्रासङ्गं कर्ता भोक्ता वक्ता श्रोता द्रष्टाहमिति तत्तादात्म्यं त्यक्त्वा कर्मणि स्वोचितेऽभिप्रवृत्तोऽपि स विद्वान् परदृष्ट्या कुर्वन्नपि स्वदृष्ट्या तु किंचिन्न करोत्येव कर्मण्यकर्मत्वदर्शनेन कर्मभिरुपाधिकृतैर्न लिप्यते इत्यर्थः ॥ २० ॥

यस्तु विवेकवैराग्यशमदमादिसाधनसम्पत्त्या सर्वाणि कर्माणि संन्यस्य श्रवणमननाभ्यां विज्ञातात्मतत्त्वो यतिर्निदिध्यासनपरो भवति स तु शरीरयात्रामात्रात्मकं कर्म कृत्वा ब्रह्मनिष्ठया निर्मूलितबन्धः सन्मुक्तो भवतीत्याह—

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥**

निराशीरिति। निःशेषं निर्गता आशिषो वैषयिक्यः कामना यस्मात् स निराशीर्विनष्टसर्वकाम इत्यर्थः। तत एव त्यक्तसर्वपरिग्रहः त्यक्ताः कौपीनाच्छादनातिरिक्ताः सर्वे परिग्रहा येन स त्यक्तसर्वपरिग्रहो योगनिष्ठापरेयतिः स्वयं यतचित्तात्मा यतौ निरुद्धौ चित्तात्मानौ मनोदेहौ येन स यद्वा यतं संस्थापितं चित्तमात्मन्येव न क्वचिदनात्मनि येन स यतचित्तात्मा सन् शारीरं शरीरस्थितिकारणं शारीरं प्राणत्राणैकप्रयोजनं वा तत्रापि केवलं यतित्वज्ञानित्वकर्तृत्वाभिमाननिर्मुक्तं शारीरं कर्म कुर्वन् किल्बिषं न प्राप्नोति। ननु व्युत्थायाथ भिक्षाचर्यं चरन्तीति प्राणहेतोर्भिक्षाया यतेर्विहितत्वाद्विहितानुष्ठित्या किल्बिषासम्भवात् अप्राप्तकिल्बिषप्राप्त्यभावप्रतिपादनमयुक्तमिति चेन्न क्वचित्किल्बिषप्राप्तिप्रसङ्गाद्यतात्मेत्युक्त्या वाचोऽपि निरुद्धत्वा-

न्मौनिनो यतेः क्वचिदभिशस्तादिभ्योऽपि भिक्षाग्रहप्रसङ्गादाभिशस्तपतितवर्जमित्यादिश्रुतिप्रतिषिद्धानुष्ठित्या स्यादेव किल्बिषं सम्यग्ज्ञानप्रतिबन्धकं यत्तदेव कर्मण्यकर्मत्वदर्शनाग्निना निर्दह्य मुक्तिं प्राप्नोतीत्याशयेनोच्यते कुर्वन्नाप्नोति किल्बिषमिति ।

यद्वा—

मधु मांसं च मद्यं च तांबूलं तैलमौषधम् ।
त्याज्यान्यष्टौ यतेर्दूरात्तथा कान्ता च काञ्चनम् ॥

इत्यतिनिषिद्धमपि शारीरं शरीरस्थितिकारणं यदभावे शरीरं निर्गच्छति श्रवणादि न सिध्यति तच्छारीरं सर्पदंशननेत्ररोगोदरशूलादिमहोपद्रवे औषधसेवालक्षणं 'औषधवदशनमाचरेदिति' श्रवणाच्छारीरं कर्म केवलमयत्नसिद्धं कुर्वन् यतिः श्रवणादिशीलः किल्विषं न प्राप्नोति ।

यद्वा—

निराशीर्नित्यानित्यविवेकवैराग्यतीव्रमोक्षेच्छाभिराशीर्भ्य ऐहिकामुष्मिकसुखाशाभ्यस्तुच्छविषयाभ्यो निर्गतो यः स निराशीस्तत एव त्यक्तसर्वपरिग्रहः धर्मप्रजासंपत्यर्थपरिगृह्यते इति परिग्रहो दारादिः सर्वोऽपि मोक्षेच्छया परित्यक्तो येन स त्यक्तसर्वपरिग्रहः संन्यस्तसर्वकर्मतत्साधनो यतिः स्वयं यतचित्तात्मा यतौ बाह्यप्रवृत्तेर्निवर्तितौ चित्तमात्मा कार्यकारणसंघातश्च द्वौ येन स यतचित्तात्मा सन् शारीरं शरीरोपाधिकत्वादात्मा शारीरः तत्प्रापकं कर्मापि श्रवणादिकं शारीरमेव भवति बाह्यं जपादिकर्म सर्वं परित्यज्यान्तरं केवलं शारीरमेव श्रवणादिलक्षणं कर्म कुर्वन् किल्विषं दुःखप्रदं संसारबन्धनं न प्राप्नोति कुर्वन्नाप्नोति किल्बिषमिति वदता भगवता जपादिकर्मणा सह श्रवणादि कुर्वन् वा श्रवणादि त्यक्त्वा तद्व्यतिरिक्तं कर्मैव कुर्वन् किल्बिषमेव प्राप्नोतीति सूचितं भवति तेन यतेः श्रवणादिरेव सर्वदा कर्तव्यः नान्यत्स्तोत्रमन्त्रजपादिकमिति सिद्धं भवति । तथा च स्मृतिः ।

यमानभीक्ष्णं सेवेत नियमान्मत्परस्त्यजेत् ।
जिज्ञासायां सम्प्रवृत्तो नाद्रियेत्कर्मचोदनाम् ॥ इति ॥

संन्यस्य श्रवणं कुर्यान्नान्यद्यतिः किंचित् क्वचिदिति चेत्यर्थः ॥ २१ ॥

अन्ये तु इदं द्वयमित्थं योजयन्ति । कथं तर्हि विवेकिनामविवेकिनां च विशेषः स्यादित्याशङ्क्य कर्मादौ सङ्गासङ्गाभ्यां विशेष इत्यभिप्रेत्याह त्यक्त्वेति । यद्वा भवतु ज्ञानाग्निना प्राक्तनानामप्रारब्धकर्मणां दाह आगामिनां चानुत्पत्तिः ज्ञानोत्पत्तिकाले क्रियमाणं तु फलाय भवेदित्याशङ्कां निराक-

करोति त्यक्त्वेति । कर्मणि फले चासङ्गं कर्तृत्वाभिमानं भोगाभिलाषं च त्यक्त्वा अकर्त्रभोक्त्रात्मसम्यग्दर्शनेन बाधित्वा नित्यतृप्तः परमानन्दस्वरूपलाभेन निराकाङ्क्षः निराश्रयः आश्रयो देहेन्द्रियादिरद्वैतदर्शनेन निर्गतो यस्मात्स निराश्रयो देहेन्द्रियाद्यभिमानशून्यः । यद्वा दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः । त्यक्तकर्मफलासङ्गेन ज्ञानवता पुरुषेण ससाधनं कर्म त्यक्तव्यमेव प्रयोजनाभावादित्याशंक्याह कर्मणीति । एवंभूतो जीवन्मुक्तो व्युत्थानदशायां लोकसंग्रहचिकीर्षया शिष्टनिन्दाजिहीर्षया वा ज्ञानोदयात्प्रागवस्थायामिव लौकिके वैदिके वा कर्मण्यभिप्रवृत्तोपि प्रारब्धकर्मवशाल्लोकदृष्ट्याऽभितः साङ्गोपाङ्गानुष्ठानाय प्रवृत्तोपि स्वदृष्ट्या नैव किंचित्करोति सः निष्क्रियात्मदर्शनेन बाधितत्वादित्यर्थः ॥ २० ॥

यदा सत्यपि विक्षेपके दर्शपूर्णमासादिकर्माणि सम्यगात्मदर्शिनः कर्मलेपो न भवति तदा किमु वक्तव्यं त्यक्तसर्वकर्मणो यतेः शरीरयात्रामात्रचेष्टस्य तल्लेपो भवतीति कैमुतिकन्यायेनाह निराशीरिति । निर्गता आशिषस्तृष्णा यस्मात्स यतौ निगृहीतौ चित्तात्मानौ अन्तःकरणबाह्यकार्यकरणसंघातौ येन सः जितेन्द्रिय इत्यर्थः । अतएव विगततृष्णत्वाज्जितेन्द्रियत्वाच्च त्यक्तसर्वपरिग्रह त्यक्ताः सर्वे परिग्रहा भोगोपकरणानि येन सः एतादृशोऽपि प्रारब्धकर्मवशात् शारीरं शरीरस्थितिमात्रप्रयोजनं कौपीनाच्छादनादिग्रहणं भिक्षाटनादिरूपं प्रतिशास्त्राभ्यनुज्ञातं कर्म कायिकं वाचिकं मानसं च तदपि केवलं कर्तृत्वाद्यभिमानरहितं पराध्यारोपितकर्तृत्वेन कुर्वन् वस्तुतोऽकर्त्रभोक्त्रात्मदर्शनात् किल्बिषं धर्माधर्मफलभूतं संसारं नाप्नोति न प्राप्नोति मुमुक्षुं प्रति पापवत्सकामपुण्यस्याप्यनिष्टफलत्वेन किल्बिषत्वं ज्ञेयम् ॥ २१ ॥

ननु त्यक्तसर्वपरिग्रहस्य यतेः शरीरस्थितिमात्रप्रयोजनस्य कर्मणोऽभ्यनुज्ञाने याचनादिनापि स्वप्रयत्नेन शरीरस्थितिहेत्वशनादिकं सम्पाद्यं तद्विना शरीरस्थितेरसम्भवादित्याशंक्य अयाचितमसंक्लृप्तमुपपन्नं यदृच्छयेति वचनानुसारेणोत्तरमाह—

**यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।**

**समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥२२॥**

यदृच्छेति । शास्त्राननुमतप्रार्थनाप्रयत्नादिव्यतिरेकेण लाभो प्राप्तिस्तस्यान्नाच्छादनादेः शास्त्रानुमतस्य यदृच्छालाभस्तेन संतुष्टः संजातालं-

प्रत्ययस्तदधिकतृष्णाराहित इत्यर्थः। तथा च शास्त्रे भैक्ष्यं चरेदिति प्रकृत्य अयाचितमसङ्कल्पमुपपन्नं यदृच्छयेति याञ्चासङ्कल्पादिप्रयत्नं वारयति

न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया।

नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित ॥

इति मनुरपि तद्वारयति। यतयो भिक्षार्थं ग्रामं प्रविशन्तीत्यादिशास्त्रानुमतस्तु प्रयत्नः कर्तव्य एव। एवं लब्धमपि शास्त्रनियतमेव ग्राह्यं न तु सर्वम्।

कौपीनयुगलं वासः कन्था शीतनिवारणी।

पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम् ॥

इत्यादिस्मृतेः। ननु स्वप्रयत्न विनाऽलाभे शीतोष्णादिपीडितः कथं जीवेदत आह द्वन्द्वातीतः द्वन्द्वानि क्षुत्पिपासाशीतोष्णादीन्यतीतोऽतिक्रान्तः तैर्बाध्यमानोऽप्यक्षुभितचित्तः समाधिदशायां तेषामभानात्। व्युत्थाने तु भानेपि परमानन्दाद्वितीयाकर्त्रभोक्त्रात्मज्ञानेन बाधात्। अत एव विमत्सर विगतः परोत्कर्षाऽसहनपूर्वकस्वोत्कर्षवांछारूपो मत्सरो यस्मात्स अद्वितीयात्मदर्शनेन निर्वैरबुद्धिः अतएव समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च हर्षविषादरहितः सः स्वानुभवेनाकर्तैव लोकदृष्ट्या शरीरस्थितिमात्रप्रयोजनभिक्षाटनादिकर्म कृत्वापि न निबध्यते बंधहेतोः सहेतुकस्य कर्मणो ज्ञानाग्निना दग्धत्वादित्युक्तानुवादः।

परावरैकत्वविज्ञानाग्निनिर्दग्धाविद्यातत्कार्यग्रंथेर्जीवन्मुक्तस्य विदुषः शरीरयात्रातिरिक्तं कर्तव्यं कर्म नास्तीति प्रतिपाद्य निदिध्यासोर्यतेर्मौनिनस्त्वन्नतद्दानविचारमन्तरेण शरीरयात्रां कुर्वतोपि विमुक्तौ प्रतिबंधो नास्तीत्युक्त्वा जीवन्मुक्तस्याजगरवृत्तेर्यदृच्छाप्राप्तेनान्नेन जीवनं कुर्वतोपि यतेर्या तृप्तिस्सा मुक्तिप्रतिबंधकी न भवतीतीदानीं प्रतिपादयति श्रीभगवान्वासुदेवो यदृच्छेति। द्वन्द्वातीतः द्वन्द्वानि त्वमहमिति इदमद इति इष्टमनिष्टमिति शुद्धमशुद्धमिति द्वैतमद्वैतमित्यादीनि विपरीतज्ञानान्यतीतः सर्वत्र ब्रह्मदृष्ट्या विनष्टविपरीतदर्शनस्तत एव विमत्सरः अहमेवेदं सर्वमिति सर्वस्य स्वात्मत्वेनाधिगतत्वादुत्कृष्टत्वापकृष्टत्वभावनानुपपत्तौ सर्वत्रात्मबुद्धिरत एव च यदृच्छालाभसंतुष्ट अयत्नप्राप्तो लाभो यदृच्छालाभः प्रारब्धवशात्स्वत एव प्राप्तः साधुना वाऽसाधुना दत्तः शुद्धोऽशुद्धो वाल्पोनल्पो वान्नादिस्तेनैव सन्तुष्टः सन्नाहारस्य सिद्धावसिद्धौ च समो ब्रह्मानन्दानुभूत्या स्वयं हर्षविषादवैवर्ण्यादिरहितो भूत्वेवं शरीरयात्रां कृत्वाप्याजगरो ब्रह्मविद्यतिर्न बध्यते मुक्तः प्रतिबंधं न प्राप्नोति लोकदृष्ट्या

त्वाहारादिवैषम्येन प्रतिबंधवद्दोषेण प्रतीयमानोऽपि विद्वान् सर्वमिदमहं च ब्रह्मैवेति भोक्तृभोज्यदातृदेयादेः सर्वदृश्यस्य ब्रह्ममात्रत्वेन प्रविलापितत्वात्परे ब्रह्मण्यद्वितीये प्रतिबन्धहेतोरन्यस्यासंभवात्पतितेऽस्मिन् विद्देहे विदेहमुक्तिं प्राप्नोतीत्यर्थ इत्याहुरन्ये ॥ २२ ॥

ननु सर्वमिदमहं च ब्रह्मैवेति सर्वस्यापि स्वस्य च ब्रह्मत्वमेव प्रत्यक्दृष्ट्या सर्वदा पश्यतां जीवन्मुक्तानां ब्रह्मविदां शरीरयात्रात्मकं कर्म ब्रह्मदृष्ट्या प्रविलापितत्वेन निस्सत्ताकतया तेषां मुक्तिप्रतिबन्धकं मास्तु लोकानुग्रहकामनया कर्मणि प्रवृत्तस्याधिकारिकस्यान्यस्य वा विदुषोऽहं कर्ता तेनेदं कर्तव्यमिति क्रियाकारकभेददृष्टिमवष्टभ्य क्रियमाणेन कर्मणा मुक्तिः प्रतिबंध्यत एव नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीत्यादिस्मृतिनियमादित्याशङ्कायां न ब्रह्मविद्भिर्महापुरुषैः क्रियमाणं क्रियाकारकादिभेदभिन्नमपि कर्म लौकिकं वैदिकं च सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मबुद्ध्यैव क्रियते न तु मयेदं क्रियत इति भेददृष्ट्या ततस्तैः क्रियमाणं कर्माकर्मैव सत्स्वयं तेषां मुक्तिं प्रतिबद्धुं न शक्नोतीत्याशयेनाह—

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**

**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

गतसङ्गस्येति । मुक्तस्य ब्रह्मण्येवात्मभावापत्त्याऽहं ममाभिनिवेशेन विमुक्तस्य निरहङ्कृतेरत एव गतसङ्गस्य सज्यते पुमाननेन कर्मस्विति सङ्गः कामः स गतो यस्य तस्य गतसङ्गस्य निष्कामस्यात एव ज्ञानावस्थितचेतसः ज्ञानं सर्वत्र ब्रह्मदर्शनलक्षणं तत्रैवावस्थितं चेतो यस्य तस्य ज्ञानावस्थितचेतसः दृश्यावगाहिन्या वृत्तेः सदा ब्रह्माकारतामेवापादयतो यज्ञाय विष्णवे । यद्वा श्रौतैः स्मार्तैश्च कर्मभिर्देवान्यजंतीति यज्ञाः ब्राह्मणादयस्तेभ्यः जातावेकवचनं यज्ञाय लोकहितायैवाचरतः कर्माणि कुर्वत आधिकारिकस्य नित्यमनुष्ठीयमानं कर्म समग्रं कारणत्रयनिर्वर्तितं सर्वं कर्माकर्मादिलक्षणं वा सर्वं प्रविलीयते ब्रह्मबुद्ध्या प्रविलापितं सत्समूलं विनश्यति न जन्मादिफलाय कल्पत इत्यर्थः ।

अन्ये त्वित्थं योजयन्ति । त्यक्तसर्वपरिग्रहस्य यतेर्यद्भिक्षाटनादिरूपं कर्म तत्कृत्वा न निबध्यते इत्युक्ते गृहस्थस्य ब्रह्मविदो जनकादेर्यज्ञादिरूपं कर्म बन्धकं स्यादित्याशङ्कामपनेतुं त्यक्त्वा कर्मफलासंगमित्यादिनोक्तं विवृणोति गतसंगस्येति । गतः सर्वतो निवृत्तः संगः कर्मफलासक्तिर्यस्य

तस्य मुक्तस्य कर्तृत्वभोक्तृत्वधर्माधर्मादिबंधनशून्यस्य ज्ञाने ब्रह्मात्मैक्यबोध एवावस्थितं चेतश्चित्तं यस्य तस्य स्थितप्रज्ञस्येत्यर्थः । गतसंगत्वे हेतुः कर्तृत्वाद्यध्यासशून्यत्वं तत्र हेतुः स्थितप्रज्ञत्वमित्येवमुत्तरोत्तरस्य पूर्वपूर्वहेतुत्वं बोध्यम् । एतादृशस्यापि प्रारब्धकर्मवशाद्यज्ञाय ज्योतिष्टोमादियज्ञसंरक्षणार्थं तत्र श्रेष्ठाचारत्वेन लोकप्रवृत्त्यर्थं यज्ञाय विष्णवे तत्प्रीत्यर्थमिति वा आचरतः कुर्वतः कर्म यज्ञदानादिकं समग्रं सहाग्रेण फलेन विद्यते इति समग्रं प्रकर्षेण कारणोच्छेदनात्मज्ञानेन विलीयते विनश्यतीत्यर्थः ॥ २३ ॥

ननु

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥

इत्यादिवचनेभ्य कर्मफलस्यावश्यभावित्वात्कस्मात्क्रियमाणं कर्म फलमदत्त्वैव प्रविलीयत इत्याशङ्क्य ब्रह्मबोधेन तत्कारणस्य क्रियाकारकफलात्मकस्य द्वैतस्य बाधितत्वादित्याह—

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥ २४ ॥**

ब्रह्मेति । अर्प्यतेऽनेनेत्यर्पणं जुह्वादि मंत्रादि च करणकारकं तथार्प्यतेऽस्मा इत्यर्पणं देवतारूपं संप्रदानं तथार्प्यतेऽस्मिन्नित्यर्पणमधिकरणं देशकालादि तत्सर्वं ब्रह्माणि कल्पितत्वाद्ब्रह्मैव रज्जुकल्पितसर्पवदाधिष्ठानव्यतिरेकेणासदित्यर्थः । हूयते यदिति हविर्घृतादिद्रव्यं यजमानकर्तृकस्वत्वत्यागरूपयागाध्वर्युकर्तृकप्रक्षेपरूपहोमक्रिययोः साक्षात्कर्मकारकं तदपि ब्रह्मैव । घृतादिहविर्यत्राग्नौ प्रक्षिप्यते सोपि ब्रह्मैवेत्याह ब्रह्माग्नाविति-समस्तं पदं । तथा येन कर्त्रा यजमानेनाध्वर्युणा च त्यज्यते प्रक्षिप्यते च तदुभयमपि कर्तृकारकं तृतीययानूद्य ब्रह्मेति विधीयते इत्याह ब्रह्मणेति एवं तेन ब्रह्मरूपेण कर्त्रा हुतं हवनं त्यागक्रिया प्रक्षेपक्रिया च तदपि ब्रह्मैव। तथा तेन हवनेन यद्गन्तव्यं प्राप्यं स्वर्गादिफलरूपं अवाहितं कर्म तदपि ब्रह्मैव अत्रत्य एवकारः सर्वत्र सम्बध्यते । हुतमित्यत्रापीत एव ब्रह्मेति सम्बध्यते काकाक्षिगोलकन्यायेन । अनेन प्रकारेण कर्मणि समाधिर्ब्रह्मज्ञानं यस्य स कर्मसमाधिस्तेन ब्रह्मविदा कर्मानुष्ठात्राऽपि ब्रह्म परमानन्दाद्वयम्

गन्तव्यमित्यनुषज्यते । यद्वार्प्यतेऽस्मै फलायेति व्युत्पत्त्यार्पणपदेनैव स्वर्गादिफलमपि ग्राह्यं तथा च तेन कर्मसमाधिना ब्रह्मविदा गन्तव्यं ब्रह्मैव न स्वर्गादितुच्छफलं विद्यया आविद्यककारकव्यवहारस्य बाधितत्वात् तदुक्तं वार्तिककृद्भिः—

कारकव्यवहारे हि शुद्धवस्तु न वीक्ष्यते ।
शुद्धे वस्तुनि सिद्धे च कारव्यापृतिः कुतः ॥

इति ज्ञानफलकथनं । तथा चोत्तरार्द्धे पूर्वं ब्रह्मपदं हुतमित्यनेन पूर्वार्द्धगतेन सम्बध्यते चरमं गन्तव्यपदेनेति नोभयत्र सम्बन्धकल्पनाक्लेश इति समंजसम् । तदेवं सर्वेषां क्रियाकारकव्यवहाराणां ब्रह्माज्ञानकल्पितानां ब्रह्मतत्त्वज्ञानेन बाधे रज्ज्वज्ञानकल्पितानां सर्पदण्डधारादीनां रज्जुतत्त्वज्ञानेनेव बाधितानुवृत्त्या क्रियाकारकादिव्यवहाराभासो दृश्यमानोऽपि दग्धपटन्यायेन फलाय कल्पत इत्यनेन श्लोकेन प्रतिपाद्यते । ब्रह्मदृष्टिरेव च सार्वयज्ञात्मिकेति स्तूयत इति बोध्यम् ।

अन्ये तु प्रविलापनप्रकारमेवाह ब्रह्मेति । हविरर्प्यतेऽनेनेत्यर्पणं चमसस्रुक्स्रुवादिकं सर्वं ब्रह्मैवेति प्रत्यग्दृष्ट्या ब्रह्मवित्पश्यति मूढदृष्ट्या यद्रजतं तदेव विवेकिदृष्ट्या शुक्तिर्यथा तथा अज्ञदृष्ट्या यच्चमसादियज्ञसाधनं तदेव ब्रह्मविद्दृष्ट्या ब्रह्मैव भवतीत्यर्थः । ब्रह्म हविर्यज्ञीयं यद्धविश्चरुपुरोडाशादिकं होमद्रव्यं तत्सर्वं ब्रह्मैव पश्यति । ब्रह्मणा होमकर्त्रा कर्तापि ब्रह्मैवेति यजमानं स्वं ब्रह्मविद्ब्रह्मैव पश्यति । ब्रह्माग्नौ ब्रह्मैवाग्निस्तं होमाधिकरणं ब्रह्मैवेति पश्यति । तस्मिन्ब्रह्माग्नौ यद्धुतं हवनक्रिया तदपि ब्रह्मैव पश्यति । ब्रह्मकर्मसमाधिना सर्वस्य ब्रह्ममात्रत्वदर्शनं यत्तद्ब्रह्मकर्म तस्मिन्ब्रह्मकर्मणि समाधिश्चित्तस्य स्थापनं यस्य तेन ब्रह्मकर्मसमाधिना सर्वं ब्रह्मैव पश्यता ब्रह्मविदा यद्गन्तव्यमेवं दर्शनस्य फलत्वेन प्राप्तव्यमिदमेवाहमस्मीति तद्ब्रह्मैव भवति । इत्थं लोकहितार्थप्रवृत्तस्याधिकारिकस्य ब्रह्मविदोऽपि ससाधनं सर्वं कर्म ब्रह्मवृत्त्या ब्रह्ममात्रत्वेन प्रविलापितत्वात्स्वयं निःसत्त्वेनाकर्मैव सङ्गाय न भवतीति सिद्धम् । एतेन चलनात्मिकायाः प्रवृत्तेर्विरोधस्य दुष्करत्वात्सर्वदा विदुषोऽपि प्रवर्तितव्यत्वे प्राप्ते विवेकिनो व्यर्थव्यापृत्यपेक्षया वैदिकी प्रवृत्तिर्भूषणाय मनोहर्षाय लोकहिताय चान्ततोऽप्यबन्धाय च भवत्यतस्तयैव दृष्ट्या सद्भिर्ब्रह्मविद्भिः प्रवर्तितव्यमिति सूचितं भवतीत्याहुः ।

अपरे तु अथोपक्रान्तप्रमेयमुपसंहरन्नाह ब्रह्मेति । अर्पणं चित्तस्य दानसंकल्पो यस्तद्ब्रह्मरूपत्वाद्ब्रह्मैव । तथा हविःसमित्तिलाज्यादि वैराजब्रह्मणो व्याष्टिरूपत्वाद्ब्रह्मैव अग्निरपि वैश्वानरापरपर्यायं ब्रह्मैव तस्मिन्येन पुरुषेण हुतं सोऽपि ब्रह्मैवेति ज्ञात्वा येन क्रियते तेन ब्रह्मैव गन्तव्यं प्राप्तव्यं । किंभूतेन ब्रह्मकर्मसमाधिना ब्रह्मार्पणं कर्म ब्रह्मकर्म तस्मिन्समाधिश्चित्तैकाग्र्यं यस्य तेनेत्याहुः ॥ २४ ॥

पूर्वं ब्रह्मार्पणं ब्रह्महविरिति मंत्रेण चमसादीनां ब्रह्ममात्रत्वदर्शनलक्षणस्य ज्ञानस्य यज्ञरूपत्वेन वर्णयित्वा तस्यैव ज्ञानयज्ञस्य साक्षान्मोक्षैकसाधनत्वेन दैवादियज्ञापेक्षया सर्वोत्तमत्वं प्रतिपादयितुं मोक्षस्य व्यवहितसाधनानां दैवादियज्ञानां मुमुक्षुभिः स्वाधिकारानुरूपेण चित्तशुद्ध्यर्थमनुष्ठेयत्वं सूचयितुं च दैवादियज्ञान्निरूपयति दैवमित्याद्यष्टभिः—

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

देवानिन्द्रादीनुद्दिश्य प्रवृत्तो यज्ञो दैवस्तं दैवमेव यज्ञं श्रौतं स्मार्तं चापरे मोक्षकामाः योगिनः कर्मयोगिनो गृहिणश्चित्तशुद्ध्यर्थं पर्युपासतेऽनुतिष्ठन्तीति दैव एव वैदिको यज्ञो गृहिणा कर्तव्य इति सूचयित्वा ब्रह्मविदां यतीनां त्वयमेव यज्ञः कर्तव्यो मुक्त्यर्थमित्युक्तमेव ज्ञानयज्ञं प्रकारान्तरेण वर्णयति ब्रह्माग्नाविति । अपरे गृहिभ्यो भिन्ना यतयः श्रवणादिभिर्विज्ञातात्मतत्त्वाः स्वयं ब्रह्माग्नौ 'सत्यं ज्ञानमनन्तं ब्रह्म तदेतद्ब्रह्मापूर्वमनपर"मित्यादिश्रुतिप्रसिद्धं निरस्ताशेषविशेषं सच्चिदानन्दघनं मत्परं ब्रह्म तदेवाग्निरविद्यातत्कार्यदावदाहकत्वात्सोपाधिकात्माहुतिप्रक्षेपाधिकरणत्वाच्च परं ब्रह्माग्निरित्युच्यते तस्मिन् ब्रह्माग्नौ यज्ञं पामरैरहं भोक्तेति विषयोपभोगैरिज्यत इति यज्ञः आत्मा सोपाधिकस्तं यज्ञं वस्तुतो निर्विशेषमप्यध्यासतो बुद्ध्याद्युपाधियुक्तमात्मानमाहुतिनिक्षेपणकाले यज्ञेनात्मना निर्विशेषस्वरूपेणैव ब्रह्मणि जुह्वति । अहं ब्रह्मास्मीत्यहं पदार्थं सोपाधिकवत्प्रतीयमानं विवेकवृत्त्या निर्विशेषं भावयित्वा ब्रह्माभिन्नमनुभवन्तीत्यर्थः । यद्वा यज्ञं सोपाधिकमात्मानं "यज्ञेन यज्ञो" विष्णुरिति वै श्रवणात्सोपाधिकेनेश्वरेण सहैव जुह्वति सोपाधिकमीश्वरं सोपाधिकमात्मानं चोभौ तत्तदुपाधिमपोह्य चोभयोरधिष्ठानभूतेन तुरीयेण निर्विशेषेण ब्रह्मणाऽभिन्नौ पश्यन्ति । यथा तरङ्गबुद्बुदौ तन्नामरूपापोहेन तदाधारभूतसमुद्रेणाभिन्नौ पश्यन्ति तद्वदित्यर्थः ।

अपरे योगिनः कर्मकुशलाः दैवं यज्ञं देवसम्बन्धी देवः इन्द्रसूर्यवरुणादय इज्यन्ते यस्मिन्निति यज्ञस्तं दैवं यज्ञं पर्युपासते परितः सर्वत्र देवेषु ब्रह्मबुद्धिराहित्येनोपासत इत्यर्थः । अपरे ज्ञानयोगिनस्तु यज्ञेन ज्ञानयज्ञेन यज्ञं कर्मरूपं ब्रह्मरूपाग्नौ जुह्वति प्रविलापयन्तीत्यर्थ इत्यन्ये ।

अपरे तु एवं जीवब्रह्माभेदज्ञानस्य यज्ञत्वसम्पादनेन स्तवनं कृत्वा पुनरपि तस्य स्तुत्यर्थमितरान्यज्ञान्दर्शयति दैवमिति । अपरे योगिनः कर्मयोगिनः दैवमेव यज्ञं देवा इन्द्रादय इज्यन्ते येन स दैवस्तमेव यज्ञं दर्शपूर्णमासज्योतिष्टोमादिरूपं पर्युपासते कुर्वन्ति न ज्ञानयज्ञम् । एवं कर्मयज्ञमुक्त्वान्तष्करणशुद्धिद्वारेण तत्फलभूतं ज्ञानयज्ञमाह ब्रह्माग्नाविति । अपरे पूर्वविलक्षणाः ब्रह्मज्ञाननिष्ठाः संन्यासिनः यज्ञं त्वम्पदार्थं प्रत्यगात्मानं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्मेत्यादिश्रुत्युक्तस्तदेवाग्निवृत्त्यारूढतया सर्वस्य दाहकत्वगुणयोगात्तस्मिन्ब्रह्माग्नौ यज्ञेनैव यज्ञशब्द आत्मनामसु यास्केन पठितः । इत्थंभूतलक्षणे तृतीया । एवकारो भेदाभेदव्यावृत्त्यर्थः । तथा च यज्ञेनैवात्मनेवाशनपानादिसर्वधर्मरहितस्वरूपेणोपजुह्वति । सोपाधिकस्यात्मनो निरुपाधिकपरब्रह्मरूपेण दर्शनमेव होमस्तं कुर्वन्ति । निर्गुणब्रह्मस्वरूपतयाऽहं ब्रह्मास्मीत्येवं पश्यन्तीति भावः । जीवब्रह्मैक्यज्ञानं यज्ञत्वेन सम्पाद्य तदेव तत्साधनयज्ञमध्ये पठ्यते "श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञ" इत्यादिना स्तोतुमिति द्रष्टव्यमित्याहुः ॥ २५ ॥

एवं ब्रह्मविदां कर्तव्यं ज्ञानयज्ञं विधायाथाब्रह्मविदां कर्तव्यानि यज्ञान्तराण्याह—

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥२६॥**

श्रोत्रादीनीति । उक्तेभ्योऽन्य त्वब्रह्मविदो मुमुक्षवो नैष्ठिकब्रह्मचार्यादयः श्रोत्रादीनि वागादीनि चेन्द्रियाणि संयमाग्निषु संयमो नाम तत्तदिन्द्रियस्य तत्तद्विषयाद्विनिवर्त्य तत्तत्स्थाने निग्रहः इन्द्रियाणां बहुत्वात्संयमा बहवस्त एवाग्नयस्तेषु संयमाग्निषु चक्षुरादीन्द्रियाहुतीर्जुह्वति इन्द्रियनिग्रहरूपं यज्ञं कुर्वन्तीत्यर्थः । एतदन्ये गृहिणो मुमुक्षवः स्वधर्मनिष्ठाः शब्दादिविषयानिषिद्धान्योग्यकाल एवेन्द्रियाग्निषु तन्निक्षेपणाधिकरणत्वादिन्द्रियाण्येवाग्नयस्तेषु जुह्वति विषयानुभवनियम एव तेषां यज्ञ इत्यर्थः ।

अन्ये तु एवं मुख्यगौणौ द्वौ यज्ञौ दर्शयित्वाऽधुना यावत्किंचिद्वैदिकश्रेयःसाधनं तत्सर्वं यज्ञत्वेन संपाद्यते । तत्र तावद्यज्ञरूपं दर्शयति श्रोत्रादीनीति । अन्ये प्रत्याहारपरा योगिनः श्रोत्रादीनि ज्ञानेन्द्रियाणि शब्दादिविषयेभ्यः संयमा एवाग्नयस्तेषु संयमाग्निषु जुह्वति इन्द्रियसंयममेव कुर्वन्ति विषयेभ्य इन्द्रियाणि प्रत्याहरन्तीति भावः । ननु बाह्येन्द्रियाणां मनसि संयमस्यैकत्वात्कथं बहुवचनमिति चेन्न इन्द्रियभेदात्संयमबहुत्वोपपत्तेः । इन्द्रियप्रत्याहाराधिकरणत्वेन व्यवस्थितानां मनोरूपाणां संयमानां होमाधारत्वादग्नित्वव्यपदेशोऽप्युपपद्यते । अन्ये तत्त्वविदः प्रारब्धवशादुपलब्धान् शब्दादीन् शास्त्राविरुद्धान्विषयानिन्द्रियाग्निषु जुह्वति । श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्त इत्यर्थः ।

अन्ये तु संयमाग्निषु धारणा ध्यानं समाधिरिति त्रयमेकविषयं संयमशब्देनोच्यते त्रयमेकत्र संयम इत्युक्तेः । तत्र हृत्पुंडरीकादौ मनसश्चिरकालस्थापनं धारणा । एवमेकत्र धृतस्य भगवदाकारवृत्तिप्रवाहोऽन्याकारप्रत्ययव्यवहितो ध्यानम् । सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः । अनया रूपेण संयमानां भेदादग्निष्विति बहुवचनं तेषु इन्द्रियाणि जुह्वति धारणाध्यानसमाधिसिद्ध्यर्थं सर्वाणीन्द्रियाणि स्वविषयेभ्यः प्रत्याहरन्तीत्यर्थः । तदुक्तं "स्वस्वविषयासम्प्रयोगे चित्तरूपानुकार एवेन्द्रियाणां प्रत्याहार" इति । विषयेभ्यो निगृहीतानीन्द्रियाणि चित्तरूपाण्येव भवन्ति । ततश्च विक्षेपाभावाच्चित्तधारणादिकं निर्वहतीत्यर्थः तदनेन प्रत्याहारधारणाध्यानसमाधिरूपं योगांगचतुष्टयमुक्तम् । तदेवं समाध्यवस्थायां सर्वेन्द्रियवृत्तिनिरोधो यज्ञत्वेनोक्तः । इदानीं व्युत्थानावस्थायां रागद्वेषरहितेन विषयभोगो यः सोऽप्यपरो यज्ञ इत्याह शब्दादीनीति । अन्ये व्युत्थितावस्थाः श्रोत्रादिभिरविरुद्धविषयग्रहणं स्पृहाशून्यत्वेनानन्यसाधारणं कुर्वन्ति स एवैतेषां होम इत्यर्थ इत्याहुः ॥ २६ ॥

यज्ञान्तरमाह—

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥**

सर्वाणीति । चपुनरपरे योगिनः सर्वाणि इन्द्रियाणां श्रोत्रत्वक्चक्षुरसनघ्राणाख्यानां ज्ञानेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानां कर्मेन्द्रियाणां च कर्माणि शब्दस्पर्शरूपरसगन्धग्रहणात्मकानि वचनादानविहरणो-

## येषु न्यायसूत्रेषु तत्तद्ग्रन्थभेदेन सूत्रासूत्रत्वप्रयुक्तिः

## तेषां सूचीपत्रम् ।

| संख्या | सूत्रम् । | न्या०वृ० | सु०वृ० | सु०भा० | सु०वा० |
|---|---|---|---|---|---|
| १ | संस्कारोद्भवा प्रत्यभिज्ञा।[1] | १-१-५ | + | + | + |
| २ | प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य पृथग् वचनम् । | २-१-२५ | क | + | + |
| ३ | सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात् । | २-१-२६ | ख | + | + |
| ४ | प्रमाणतो ऽनुपलब्धेः । | + | २-१-५१[4] | + | २-१-५३ |
| ५ | अर्थवादः । | २-१-६४ | + | + | + |
| ६ | विमर्शहेत्वनुयोगे च विप्रतिपत्तेः । | + | २-२-१३ | + | २-२-१३ |
| ७ | विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः । | + | २-२-३८ | २-२-३५ | २-२-३८ |

नोटस १ इदमादर्शपुस्तके सूत्रत्वेनोल्लिखितम्, न्या० सू० वि० कारलेखेना ऽपि सूत्रत्वं प्रसङ्गान्निरूपणं च नातीव दोषावहमन्यत्रा ऽनिरूपणात् ।

(२) } इमे सूत्रे सु० वृत्तौ २४ सूत्रादग्रे क, ख, शब्दाभ्यां चिह्निते सि०

(३) } सूत्रत्वेना ऽभिमते तात्पर्यटीकायां परिशुद्धौ च सि० सूत्रत्वेन ।

(४) इदं सु० वृ० सु० वा० चास्ति । (५) इदमादर्शपुस्तके ऽस्ति अन्यत्र नास्ति औचितीत्वस्य प्रतीयते

| संख्या | सूत्रम् । | आ०वृ | मु०वृ० | मु०भा० | मु०वा० |
|---|---|---|---|---|---|
| ८ | न तद्विकाराणां सुवर्णभावाव्यतिरेकात् । | २-२-४७ | + | + | २-२-४९ |
| ९ | वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः । | + | २-२-५० | ÷ | २-२-५० |
| १० | सामान्यवतो धर्मयोगो न पुनः सामान्यस्य । | + | २-२-५१ | + | २-२-५१ |
| ११ | तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः । | २-२-५७ | २-२-६१ | + | २-२-५६ |
| १२ | पार्थिवाप्यतैजसं तद्गुणोपलब्धेः । | ३-१-२९ | + | + | + |
| १३ | निश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्— | ३-१-३० | (ख) | + | + |
| १४ | गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् | ३-१-३१ | (ग) | + | + |
| १५ | अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः । | + | ३-१-३६ | ३-१-३६ | ३-१-३६ |
| १६ | सर्वकारित्वश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः । | + | ३-१-३७ | ३-१-३७ | ३-१-३७ |
| १७ | अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः । | | ३-१-३९ | ३-१-३९ | ३-१-३९ |
| १८ | नेन्द्रियार्थानुपलब्धेः | | ३-१-५२ | ३-१-५२ | + |
| १९ | स्वावयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः । | | ३-१-५३ (३-१-५२ | ३-१-५४ वाक्यम् | + + |

| संख्या | सूत्रम् । | आ०सू० | मु०वृ० | मु०भा० | मु०धा० |
|---|---|---|---|---|---|
| २० | आहृतत्वादहेतुः । | | ३ १-५५ | ३ १ ५२ वाक्यम् | + |
| २१ | विप्रतिषेधाच्च न त्वगेका- | | ३ १-५६ | ३ १ ५४ वाक्यम् | + |
| २२ | संसर्गाच्चाऽनेकगुणग्रहणम् | ३-१-६३ | ३-१-६७ | + | ३ १ ६४ |
| २३ | न हेत्वभावात् | ३-२ १० | ३-२-१० | + | + |
| २४ | प्रातिभवत्तु प्रणिधाना- द्यनपेक्षे स्मार्त्ते यौगपद्य- प्रसङ्गः । | + | ३-२ ३५ | ३-२ ३४ | + |
| २५ | कुम्भादिष्वनुपलब्धेर- हेतुः । | + | ३-२-३९ | ३ २-३८ | + |
| २६ | बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः । | + | ३ २ ४६ | ३ २-४४ | + |
| २७ | तथा ऽहङ्कारस्य । | + | ३-२ ६८ | ३-२-६७ | ३-२ ६५ |
| २८ | उपपन्नश्च तद्वियोगः क- र्मक्षयोपपत्तेः । | + | ३ २ ७२ | ३-२ ७१ | + |
| २९ | न करणाकरणयोरार- म्भदर्शनात् । | + | ३ २-७४ | ३-२ ७३ | + |
| ३० | अधिकाराच्च विधानं वि- द्यान्तरवत् । | + | ४-१ ६१ | ४ १६० | ४ १ ६१ |
| ३१ | पात्रचयान्तानुपपत्तेश्च- फलाभावः । | ४ १ ६२ | ४ १-६२ (क) | + | ४-१ ६३ |
| ३२ | कृत्स्नैकदेशावृत्तित्वाद- वयवानामवयव्यभावः । | + | ४.२.७ | ४ २.७ | ४-२,७ |

| संख्या | सूत्रम् । | आ०वृ० | मु०वृ० | मु०भा० | मु०वा० |
|---|---|---|---|---|---|
| ३३ | तेषु चाऽवृत्तेरवयव्य-भावः । | + | ४-२-८ | ४-२-८ | ४-२-८ |
| ३४ | अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः । | + | ५-२-१५ | ५-२-१४ | ५-२-१५ |

---

## येषु न्यायसूत्रेषु पाठभेदः तेषां सूचीपत्रमिदम् ।

| संख्या | सूत्राणि | आ०वृ० १ | ०मु०वृ० २ | मु०भा० ३ |
|---|---|---|---|---|
| १ | ……उत्तरोत्तरापाये तदनन्तरापायाद्……इ० पा० क्वचित् ०-०-०……तदनन्तराभावाद् इ० पा० क्वचित् । | १-१-२ | १-१-२ | १-१-२ |
| २ | आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् । | १-१-१० | १-१-९ | १-१-९ |
| ३ | इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् । | १-१-१ | १-१-१० | १-१-१० |

१ नोटस् १-२-"तदनन्तरापायात्" "इतिपाठः तदनन्तराभावाद् इति भा० पाठः ।

२ प्रमेयमिति" इति पाठ आदर्शातिरिक्तेषु ।

३ आदर्शातिरिक्तेषु लिङ्गमिति" इति पा० ।

| संख्या सूत्राणि | आ० वृ० | मु० वृ० | मु० भा० |
|---|---|---|---|
| ४ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः। | १-१-१९ | १-१ १७ | १ १-१७ |
| ५ बाधनालक्षणं दुःखम्। | १ १-२२ | १ १-२१ | १ १ २१ |
| ६ सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतः सर्वतन्त्रसिद्धान्तः। | १-१-२८ | १-१ २८ | १-१-२८ |
| ७ समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः। | १ १ ३० | १ १-२९ | १-१-२९ |
| ८ अज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः। | १-१-४१ | १ १ ४० | १ १-४० |

| प्र० प्र० | प्र० प्र० | प्र० प्र० | प्र० प्र० |
|---|---|---|---|
| १-अ-आ० द्वि० | | | |
| १ प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः। | १-२-१ | १-२-१ | १ २ १ |
| २ स प्रतिपक्षस्थापनाहीनो वितण्डा। | १-२-४५ | १ २-४४ | १-२-३ |

नोटस्।

४ आदर्शातिरिक्तेषु "...शरीरारम्भ इति" इति पाठः।

५ आदर्शातिरिक्तेषु "...दुःखमिति" इति पाठः।

६ मु० वृ० मु० भा० च "...तन्त्रेऽधिकृतोऽर्थ इति पाठः।

७ मु० भा० "समानतन्त्रासिद्ध" इत्यादिः पाठः।

८ "अविज्ञाततत्त्वे" इति पाठ आदर्शातिरिक्तपुस्तकेषु।

१-४-"पञ्चावयवोपपन्नः पक्ष-"इति पाठ आदर्शातिरिक्तयोः।

२ स्थापनाहीनो-"इतिपाठो मुद्रितवृत्तिभाष्ययोः।

| संख्या | सूत्राणि | आ०वृ० | मु०वृ० | मु०भा० |
|---|---|---|---|---|
| ३ | अनैकान्तः सव्यभिचारः। | १-२-४७ | १-२-४६ | १-२-५ |
| ४ | साध्याविशिष्टश्च साध्यत्वात् साध्यसमः। | १-२-५० | १-२-४८ | १-२-८ |
| ५ | तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च। | १-२-५३ | १-२-५२ | १-२-११ |
| अ० द्वि० | | अ० द्वि० | अ० द्वि० | अ० द्वि० |
| १ | पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसंनिकर्षात् प्रत्यक्षसिद्धिः। | २-१-९ | २-१-९ | २-१-९ |
| २ | पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः। | २-१-१० | २-१-१० | २-१-१० |
| ३ | सर्वप्रमाणप्रतिषेधाच्च। | २-१-१३ | २-१-१३ | २-१-१३ |
| ४ | तत्प्रामाण्ये वा न सर्वप्रमाणप्रतिषेधः। | २-१-१४ | २-१-१४ | २-१-१४ |
| ५ | प्रमेयता च तुलाप्रामाण्यवत्। | २-१-१६ | २-१-१६ | २-१-१६ |

नोटस् ३...न्तिकः सव्यभिचार" इति पाठो मु० वृ० भा०।
४..."ष्टः साध्यत्वात्साध्यसम" इति पाठः ०-३- ययोः।
५ "...उपचारच्छलं चेति" इति पाठो मु० वृ० भा०।
१ "...प्रत्यक्षोत्पत्तिरिति पाठ आदर्शातिरिक्तयोः।
२ "...सिद्धौ न प्रमाणेभ्य" इत्यादिः पाठ आदर्शातिरिक्तयोः।
३ "...प्रतिषेधानुपपत्ति" रित्यधिकमादर्शातिरिक्तयोः।
४ "...विप्रतिषेध" इति पाठ आदर्शातिरिक्तयोः।
५ "प्रमेया च" इत्यादिः पाठो भाष्ये।

| संख्या | सूत्राणि | आ०वृ० | मु०वृ० | मु०भा० |
|---|---|---|---|---|
| ६ | सद्धिनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिः । | २-१-१८ | २-१८ | २-१-१८ |
| ७ | तदीयप्रकाशवत् तत्सिद्धिः । | २-१-१९ | २-१-१९ | २-१-१९ |
| ८ | तद्यौगपद्यत्वान्मनसः । | २-१-२४ | २-१-२४ | २-१-२४ |
| ९ | प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य पृथग् वचनम् । | २-१-२५ | २-१-२५ | २-१-२५ |
| १० | तैश्चाप्तोपदेशो ज्ञानविशेषाणाम् । | २-१-२७ | २-१-२५ | २-१-२७ |
| ११ | न प्रत्यक्षेण यावत्तावदुपलम्भात् । | २-१-३१ | २-१-२९ | २-१-३१ |
| १२ | सेनावनादिवदिति चेन्न | | | |
| १३ | कृतताकर्त्तव्यतोपपत्तेरुभयथा ग्रहणम् । | २-१-४३ | २-१-४१ | २-१-४३ |
| | अतीन्द्रियत्वादणूनाम् । | २-१-३६ | २-१-३४ | २-१-३६ |

नोटस् ६ 'प्रमाणान्तरसिद्धिवदि" ति पाठ आदर्शातिरिक्तयोः ।

७ "न प्रदीपप्रकाशवत्तत्सिद्धिः" इति पाठ आदर्शातिरिक्तयोः ।

८ "तदयोगपद्यलिङ्गत्वाच्च न मनः ।

९ प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम्" इति पाठो भाष्ये ।

१० तैश्चापदेशो ज्ञानविशेषाणाम् इतिपाठ आदर्शातिरिक्तयोः

११ "...यावत्तावदप्युपलम्भाद् इति पाठः २-३ तीययोः ।

१२ "सेनावनवद्" इत्यादिः पाठो मु० वृ० मु० भाष्ये च ।

१३"...स्तूभयथा ग्रहणम् "इति पाठ आदर्शातिरिक्तयोः ।

| संख्या | सूत्राणि | आ०वृ० | मु०वृ० | मु०भा० |
|---|---|---|---|---|
| १४ | प्रसिद्धसाधर्म्यादुपमानसिद्धौ यथोक्तदोषानवकाशः । | २ १ ४५ | २-१ ४३ | २-१-४५ |
| १५ | नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः । | २ १ ४७ | २ १ ४५ | २-१ ४७ |
| १६ | आप्तोपदेशसामर्थ्याच्छब्दादर्थे संप्रत्ययः । | २ १-५२ | २-१ ५० | २-१ ५२ |
| १७ | पूरणप्रदाहपाटनानुपपत्तेश्च सम्बन्धाभावः । | २-१-५३ | २-१-५२ | २-१-५३ |
| १८ | स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः । | २ १-६५ | २-१-६४ | २-१-६४ |
| १९ | मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् । | २ १-६९ | २-१-६७ | २-१ ६८ |
| १ | अनर्थापत्तावर्थापत्त्यभिमानात् | २-२ ४ | २-२-४ | २-२-४ |
| २ | न लक्षणावस्थितापेक्षसिद्धेः | २ २-२१ | २-२-११ | २-२-११ |

नोट्स् १४ "...यथोक्तदोषानुपपत्तिः" इति पाठो २-३ ययोः ।

१५ "...पश्याम इति" इति पाठो २-३ ययोः ।

१६...च्छब्दादर्थसंप्रत्ययः इति पाठो भाष्ये...च्छब्दादर्थसम्प्रत्यय" इत्येकस्मिन्मु० वृ० ।

१७ पाटनानुपलब्धेश्च" इत्यादिः पाठो मु० वृ० भाष्ये च ।

१८ "स्तुतिर्निन्दे" त्यादिः पाठ आदर्शातिरिक्तयोरुचितश्च ।

१९ "मन्त्रायुर्वेदप्रामाण्यवदि"त्यादिरादर्शातिरिक्तयोः पाठः ।

१ "अनर्थापत्तावर्थापत्त्यभिमानात्" इतिपाठ आदर्शातिरिक्तयोः

२ "न लक्षणापेक्षासिद्धेः" इति पाठो मु० भाष्ये ।

| संख्या | सूत्राणि | आ०वृ० | मु०वृ० | मु०भा० |
|---|---|---|---|---|
| ३ | तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः। | २-२-१५ | २-२-१६ | २-२-१५ |
| ४ | कारणद्रव्यस्य प्रदेशशब्देनाऽभिधानात्। | २-२-१७ | २-२-१८ | २-२-१७ |
| ५ | प्रागुच्चारणादनुपलम्भादावरणाद्यनुपलब्धेः। | २-२-१८ | २-२-१९ | २-२-१८ |
| ६ | तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः। | २-२-१९ | २-२-२० | २-२-१९ |
| ७ | अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात्। | २-२-२० | २-२-२१ | २-२-२० |
| ८ | नाणु नित्यत्वात्। | २-२-२४ | २-२-२५ | २-२-२४ |
| ९ | उपलभ्यमाने चानुपलब्धेरसत्त्वादनुपदेशः | २-२-३५ | २-२-३६ | २-२-३४ |
| १० | न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः। | २-२-४१ | २-२-४३ | २-२-४१ |

नोटस ३ "...न तत्त्वविभागात्" इत्यादिः पाठो मु० वृ० मु०भाष्ये च।

४ एतदग्रे "नित्येष्वप्यव्यभिचार" इत्यधिकःपाठो मु० वृ० मु० भाष्येच।

५ अनुपलब्धे-" रित्यादिः पाठो मु० वृ० भा०

६ आवरणोपपत्तिरिति पाठो मु० वृ० भा०

७ अनुपलम्भादप्यनुपलब्धिः ( इत्यादिः पाठो भाष्ये मु० वृत्तौ च।

८ भाष्ये नाणुर्नित्यत्वाद) इति पाठः।

९ भाष्ये मु० वृत्तौच (अनपदेश) इति पाठः।

१० (न्यूनसमाधिकोपलब्धे) रित्यादिः पाठो मु० वृ० भा०।

| संख्या | सूत्राणि | आ० वृ० | मु० वृ० | मु० भा० |
|---|---|---|---|---|
| ११ | द्रव्यविकारवैषम्यवद्वर्ण-विकारविकल्पः । | २ २-४३ | २-२-४५ | २-२-४३ |
| १२ | न तद्विकाराणां सुवर्णभा-वाव्यतिरेकात् । | २-२-४७ | २-२-४९ | |
| १३ | अनवस्थायित्वे च वर्णोप-लब्धिवत् तदुपपत्तिः । | २-२-५० | २-२-५४ | २-२-४९ |
| १४ | प्रकृत्यनियमात् । | २-२-५२ | २-२-५६ | २ २-५१ |
| १५ | गुणान्तरापत्त्युपमर्दह्रास-वृद्धिलेशश्लेषेभ्यस्तु वर्णो विकारः । | २-२-५५ | २-२-५९ | २-२-५४ |
| १६ | तदनवस्थानात | २-२-५९ | २-२-६३ | २-२-५८ |
| १७ | जात्याकृतिव्यक्तयस्तु पदार्थः । | २-२-६४- | २-२-६८ | २-२-६३ |
| १ | तदभावः सात्मकप्रदाहे ऽपि तन्नित्यत्वात । | ३-१-५ | ३-१ ५ | ३-१-५ |

११ (द्रव्यविकारे) इत्यादिः पाठो मु० वृ० भा० ।

१२ क्व चित् (तद्विकाराणामित्यादिरेव पाठः ।

१३ (तद्विकारोपपत्तिरिति पाठो मु० वृ० भा० ।

१४...वर्णविकाराणाम् इत्यंशोऽधिको मु० वृ० भा० ।

१५ विकारोपपत्तेर्वर्णविकार इति पाठो मु० वृ० भा० ।

१६ (न तदनवस्थानाद) इति पाठो मु० वृ० भा० ।

१७ क्व चित्तु (व्यक्त्याकृतिजातयस्तु पदार्थ) इति पाठः ।

द्वि० द्वि० द्वि० द्वि० द्वि० द्वि० ।

१ सात्मप्रदाहे ऽपि इति पाठो मु० वृ०

| संख्या. | सूत्राणि | आ०वृ० | मु०वृ० | मु०भा० |
|---|---|---|---|---|
| २ | एकनाशे द्वितीयाविनाशात् । | ३-१-९ | ३-१-९ | ३-१-९ |
| ३ | तदात्मगुणत्वसद्भावाद्प्रतिषेधः । | ३-१-१४ | ३-१-१४ | ३-१-१४ |
| ४ | पद्मादिषु प्रबोधमीलनवत् तद्विकारः । | ३-१-२० | ३-१-२० | ३-१-२० |
| ५ | नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् । | ३-१-२१ | ३-१-२१ | ३-१-२१ |
| ६ | महदग्रहणात् । | ३-१-३४ | ३-१-३४ | ३-१-३४ |
| ७ | आदित्यरश्मेः स्फटिकान्तरिते ऽपि दाह्ये ऽविघातात् । | ३-१-४७ | ३-१-४७ | ३-१-४७ |
| ८ | एकैकस्यैवोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदुपलब्धिः । | ३-१-६२ | ३-१-६६ | ३-१-६२ |

नोटस् २ "एकविनाशे द्वितीयाविनाशान्नैकत्वम्" इति पाठो मु० वृ० भा०

३ "तदात्मगुणसद्भावाद" इत्यादिः पाठो मु० वृ० भा०

४ "पद्मादिषु प्रबोधसंमीलनविकारवत् तद्विकारः ।" इति पाठो मु० वृ० भा०

५ "वर्षकाले·" त्यादिः पाठो मु० भा०

६ "महदणुग्रहणाद्" इति पाठो मु० वृ० भाष्ययोः

७ ..."स्फटिकान्तरे ऽपि" इत्यादिः पाठो मु० वृ०

८ अत्र "एकैकस्यैवोत्तरो गुण" इत्यादिः पा० मु० वृ० द्वये । "एकैकश्येनोत्तरोत्तरगुणसद्भावाद" इत्यादिः पाटो भाष्ये- "तदनुपलब्धिः" इति आदर्शातिरिक्तेषु सर्वेषु ।

| संख्या | सूत्राणि | आ० वृ० | मु० वृ० | मु० भा० |
|---|---|---|---|---|
| १ | क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः । | ३-२-१४ | ३-२-१७ | ३-२-१३ |
| २ | सन्निकर्षाभावात्तदनुत्पत्तिः। | ३-२-२२ | ३-२-२२ | ३-२-२१ |
| ३ | स्मरणतः शरीरधारणोपपत्तेरनिषेधः । | ३-२-२९ | ३-२-२९ | ३-२-२८ |
| ४ | स्मरणकालानियमात् | ३-२-३१ | ३-२-३१ | ३-२-३० |
| ५ | व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानः । | ३-२-३३ | ३-२-३३ | ३-२-३२ |
| ६ | यथोक्तहेतुत्वात् पारतन्त्र्यात् स्वकृताभ्यागमाच्च न मनसः । | ३-२-३९ | ३-२-४१ | ३-२-४० |
| ७ | न प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणमनवस्थायित्वे ऽपि । | ३-२-४६ | ३-२-४८ | ३-२-४९ |
| ८ | प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः । | ३-२-५० | ३-२-५३ | ३-२-५२ |

१ ..."क्षीरविनाशे···तदुपपत्तिः" इति मु० वृ०, "तदुत्पत्तिः" इति भाष्ये
२ (इन्द्रियैर्मनसः) इत्यंश आदौ मु० वृ० भाष्ययोः ।
३ (स्मरत) इत्यादिः पाठो मु० वृ० भाष्ययोः ।
४ न (स्मरणकाल) इत्यादिः पाठो मु० वृ० भा० ।
५ अत्र (समानस्) इति पाठ आदर्शान्तरीययोः ।
६ (स्वकृतादित्यस्य स्थाने (अकृताभ्) इति पाठो मु० वृ० भा०
७ अत्रादौ 'न' अन्ते (अनवस्थायित्वे ऽपि) इत्यंशो ऽधिक आदर्शवृत्तौ ।
८ (पाकजातानाम्) इति पाठो मु० वृ० भा० ।

| संख्या | सूत्राणि | आ०वृ० | मु०वृ० | मु०भा० |
|---|---|---|---|---|
| ९ | न केशनखादिष्वनुपलब्धेः । | ३-२-५२ | ३-२-५५ | ३-२-५४ |
| १० | प्राप्तौ वा नियमात् । | ३-२-६५ | ३-२-६९ | ३-२-७६ |
| ११ | मनःकर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः । | ३-२-६९ | ३-२-७५ | ३-२-७४ |
| १२ | अणुश्यामतानित्यत्ववत् स्यात् | ३-२-७१ | ३-२-७७ | ३-२-७६ |
| १ | न दोषलक्षणावरोधान्मोहस्य | ४-१-९ | ४-१-९ | ४-१-९ |
| २ | न व्याघातादप्रयोगः | ४-१-११ | ४-१-११ | ४-१-११ |
| ३ | ईश्वरः कारणं पुरुषकर्मफलादर्शनात् । | ४-१-१९ | ... | ... |
| ४ | अनिमित्तनिमित्तत्वो नाऽनिमित्ततः । | ४-१-२३ | ... | ... |
| ५ | सर्वमनित्यमुत्पत्तिविनाशधर्मिकत्वात् । | ४-१-२५ | ... | ... |

---

९ (न) शब्दोऽधिक आदर्शवृत्तौ

१० (प्राप्तौ चा) इत्येवं पाठो मु० वृ० भा० ।

११ अचादिशब्दरहितः पाठ आदर्शातिरिक्ते ।

१२ अत्र (एतत् स्यादिति पाठो मु० वृत्तौ० ।

१ (विरोधाद्) इत्यादिः पाठो मु० वृ० भा

२ नकाररहितः पाठो मु० वृ० भाष्ययोः ।

३ (कर्माफलयदर्शनाद्) इति पाठो मु० वृ० भा०

४ (अनिमित्तनिमित्तत्वाद) इति पाठ आदर्शातिरिक्तयोः ।

५ (...धर्मकत्वाद्) इति पाठ आदर्शातिरिक्तयोः ।

| संख्या | सूत्राणि | आ०वृ० | मु०वृ० | मु०भा० |
|---|---|---|---|---|
| ६ | न सद्यः फलं कालान्तरोप-भोग्यत्वात् । | ४-१-४५ | ... | ... |
| ७ | नाऽसन्न सन्न सदसत्सदसतोर्वै-धर्म्यात् । | ४-१-४८ | ... | ... |
| ७ | आश्रयव्यतिरेकाद् वृक्षफलव-दित्यहेतुः । | ४-१-५१ | ... | ... |
| ८ | प्रीतिरात्माश्रयत्वादहेतुः | ४-१-५२ | ... | ... |
| ९ | विविधबाधनायोगाद् दुःखं जन्मोत्पत्तिः । | ४-१-५५ | ... | ... |
| १० | समारोपादात्मन्यप्रतिषेधः । | ४-१-६१ | ...६२ | ...६१ |
| ११ | वृत्यनुपपत्तेरपि तर्हि संशया-नुपपत्तिः । | ४-२-६ | ... | ... |
| १२ | अवयवान्तरभावे ऽप्यवृत्ते-रहेतुः । | ... | ... | ... |
| १३ | शब्दसंयोगविभवाच्च सर्वगतम् | ४-२-१९ | ४-२-२१ | ...२१ |

६ (फलम्) इति सद्यःपदानन्तरं नास्त्यादर्शातिरिक्ते ।

७ (वृक्षफलोत्पत्तिवदिति पाठो मु० वृ० भाष्ययोः ।

८ (अहेतुः) इति स्थाने ऽप्रतिषेध इति पाठो मु० वृ० भा० ।

९ (दुःखमेवे) ति पाठो मु० वृ० भा०

१० (समारोपणाद्) इति पाठो मु० वृ० भा०

११ (न संशय) इत्येवंपदघटितः पाठो मु० वृ० भा०

१२ (अवयवान्तराभावे ऽपि) इतिपदघटितः पाठो मु० वृ० भा०

१३ (सर्वसंयोगशब्दविभवादित्यादिः) पाठो मु० वृ० भा०

| संख्या | सूत्राणि | आ०वृ० | मु०वृ० | मु०भा० |
|---|---|---|---|---|
| १४ | प्रमाणोपपत्त्यनुपपत्तिभ्यां व्याघाताच्च । | ४-२-२८ | ३० | ३० |
| १५ | मायागन्धर्वनगरमृग-तृष्णावद्वा । | ४-२-३० | ३२ | ३२ |
| १६ | अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशात् । | ४-२-४० | ४० | ४० |
| ४-२ | | ४-२ | | |
| १ | प्रदीपादानप्रसङ्गविनि-वृत्तिवत्तद्विनिवृत्तिः । | ५-१-१० | १० | १० |
| २ | प्रतिषेध्ये नित्यमनित्यभा-वादनित्यत्वोपपत्तेः प्रति षेधाभावः । | ५-१-३६ | ३६ | ३६ |
| ३ | प्रतिषेधं सदोषमित्या-दिसूत्रे । | ५-१-४२ | ४२ | ४२ |
| ४ | अर्थादापन्नस्य स्वशब्देन पुनरभिधानम् । | ५-२-१५ | १६ | १५ |
| ५ | स्वपक्षदोषा इति सूत्रे । | ५-२-२० | २१ | २० |

नोटस् १४ प्रमाणानुपपत्त्युपपत्तीभ्याम् इत्येवं पाठो मु० वृ० भा०

१५ मृगतृष्णिकावद्वा इति पाठो मु० वृ० भा०

१६ योगाभ्यासोपदेशः इति पाठो मु० वृ० भा०

१ प्रसङ्गनिवृत्तिवद् इत्यादिः पाठो मु० वृ० भा०

२"....–दनित्ये नित्यत्वोपपत्ते रित्यादिः पाठो मु० वृ० भा०

३ समानो दोषप्रसङ्ग इत्यादिः पाठो मु० वृ० भा०

४ स्वशब्देन पुनर्वचनम् इति पाठो मु० वृ० भा०

५ स्वपक्षदोषा इति पाठो मु० वृ० भाष्ययोः

विश्वनाथःशरणम् ॥

## न्यायसूत्रवृत्तिविषयसूचीपत्रम् ।

ॐ नमः परमात्मने ।

# न्यायसूत्रम् ।

## महर्षि-गोतम-प्रणीतम् ।

### श्रीविश्वनाथन्यायपञ्चाननविरचित-
### वृत्तिसहितम् ।

---

वपुर्लीलालक्ष्मीजितमदनकोटिर्व्रजवधू-
जनानामानन्दं कमपि कमनीयं विरचयन् ।
स कोऽपि प्रेमाणं प्रथयतु मनोमन्दिरचर-
स्त्रिलोकीलोकानां सजलजलदश्यामलतनुः ॥ १ ॥

संयुक्तां युक्तरूपामभिनवनिहितालक्तकारक्तभासाम्
सन्ध्यापीयूषभानोरतिरुचिरतरां चूर्णयन्तीमभिख्याम् ।
मानव्यामोकनम्रत्रिपुरहरशिरोरम्यभूषाविशेषाम्
भूयो भव्यं विधातुं चरणनखरुचं भावयामो भवान्याः ॥२॥

यदीयतर्ककिरणैरान्तरध्वान्तसन्ततिम् ।
सन्तस्तरन्ति भास्वन्तमक्षपादं नमामि तम् ॥ ३ ॥

अद्वैतं गुरुधर्मयोरिव लसत्क्ष्मामण्डलीमण्डनम्
रूपं किञ्चन पौरुषं गिर इव प्रागल्भ्यसम्पादकम् ।
दाने कर्णमिवावतीर्णमपरं दीने दयादक्षिणम्
तातं विश्वविसारिचारुयशसं विद्यानिवासं नुमः ॥ ४ ॥

अलसमतिरपीदं विस्तृतं न्यायशास्त्रम्
विरहितबहुयत्नो लीलया वेत्तु विज्ञः ।
इति विनिहितचेताः कौशलं कर्तुकामो
गुरुचरणरजोऽहं कर्णधारीकरोमि ॥ ५ ॥

विद्यानिवाससूनोः कृतिरेषा विश्वनाथस्य ।
विदुषामतिसूक्ष्मधियाममत्सराणां मुदे भवतु ॥ ६ ॥

प्रयोजनमनभिसन्धाय प्रेक्षावन्तो न प्रवर्तन्ते ऽतः प्रथमं प्रयोजनमभिधानीयं तथा चाहुः ।

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ इति ।

सिद्धो ज्ञातोऽर्थः प्रयोजनम् यस्य तत्तथा एवं सिद्धसम्बन्धमित्यपि अतस्तत्प्रतिपादनाय भगवानक्षपादः प्रथमं सूत्रयति ॥

**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥**

अत्र तत्त्वज्ञाननिःश्रेयसयोः शास्त्रतत्त्वज्ञानयोश्च हेतुहेतुमद्भावः प्रमाणादितत्त्वज्ञानयोर्विषयविषयीभावः प्रमाणादिशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः शास्त्रनिःश्रेयसयोश्च प्रयोज्यप्रयोजकभावः सबन्धः । तत्त्वं ज्ञायते ऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रं तथा च शास्त्रनिःश्रेयसयोरपि तत्त्वज्ञानद्वारकहेतुहेतुमद्भाव एव सम्बन्ध इति सम्प्रदायविदः । अत्र च सर्वपदार्थप्रधानो द्वन्द्वः समासः । यद्यपि भेदे द्वन्द्वविधानादत्र च बहूनां पदार्थानामभेदान्न द्वन्द्वसम्भवस्तथापि पदार्थतावच्छेदकभेदादेव द्वन्द्व इति न दोष इत्यन्यत्र विस्तरः । तत्र च निर्देशे यथावचनं विग्रह इति यथाश्रुतभाष्यानुसारिणः प्रमाणानि च प्रमेयं च संशयश्च प्रयोजनं च दृष्टान्तश्च सिद्धान्तश्च अवयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलं च जातयश्च निग्रहस्थानानि चेति विग्रहं वर्णयन्ति । सम्प्रदायविदस्तु भाष्यस्थवचनपदेन क्वचित्सौत्रं क्वचिदार्थं च वचनं गृह्यते तत्र प्रमाणे प्रमेये च सौत्रं वचनं गृह्यते सप्रयोजनत्वात् तच्च वक्ष्यते न तु दृष्टान्तादावेकवचनं सप्रयोजनं तथा च दृष्टान्ते द्विवचनम् अन्वयिव्यतिरेकिभेदेन दृष्टान्तद्वैविध्यस्य वक्ष्यमाणत्वात् संशये सिद्धान्ते छले च बहुवचनं संशये छले च त्रैविध्यस्य सिद्धान्ते चातुर्विध्यस्य वक्ष्यमाणत्वात् अन्यथा जातिनिग्रहस्थानयोर्बहुवचनं तत्रापि व्याहन्येत एकवचनस्यैव लक्षणसूत्रे सत्त्वादिति वदन्ति । नव्यास्तु सर्वत्र प्रथमोपस्थितैकवचनेनैव विग्रहः न ह्यत्र

बहुवचनेनैव प्रमाणादीनां चतुष्टयं परिच्छिद्यते किन्नामाग्रिमाविभागेन न ह्येकद्वित्रिधवखदिरादौ धवश्च खदिरश्च पलाशश्चेति न विगृह्यते अत एव प्रयोजनस्यैकवचनान्तत्वे तद्विभागाकरणेऽपि सुखदुःखाभावतत्साधनभेदेन तस्य बहुत्वं न विरुध्यत इति प्राहुः । अत्र च निःश्रेयसे सिद्धे पद्मादिवत्तत्प्राप्तये न प्रयत्नान्तरमपेक्षितमिति प्रतिपादनायाधिगमपदम् । ननु प्रमाणादयः पदार्था इति शब्दात् प्रथमसूत्रादेव वा तत्त्वज्ञानं स्यादिति चेन्न तेषां विशिष्य ज्ञानं हि तत्त्वज्ञानं तच्चोद्देशलक्षणपरीक्षाप्रकाशकाच्छास्त्रादेव । शास्त्रं हि विशिष्टानुपूर्वीका पञ्चाध्यायी अध्यायस्त्वाह्निकसमूहः आह्निकं तु तादृशप्रकरणसमूहः प्रकरणं तु तादृशसूत्रसमूहः सूत्रं तु तादृशवाक्यसमूहः वाक्यं तु तादृशपदसमूह इति वदन्ति । अत्र समूहशब्देनानेकत्वं विवक्षितं तेनाध्यायादेराह्निकादिद्वयाद्यात्मकत्वे पि न क्षतिः । अत्र च यद्यपि मोक्षजनकज्ञानविषयत्वेन प्रमेयमेवादौ निरूपयितुमर्हं तथापि प्रमाणस्य सकलपदार्थव्यवस्थापकत्वेन प्राधान्यात् प्रथममुद्देशः ततोऽवसरतो बुभुत्सितप्रमेयस्य ततश्च पदार्थव्यवस्थापनस्य न्यायाधीनतया न्याये निरूपणीयेऽभ्यर्हितयोर्न्यायपूर्वाङ्गयोः संशयप्रयोजनयोस्तत्रापि अभ्यर्हिततया संशयस्य प्रथमम् । न च निर्णीते पि मननविधानान्न संशयस्य न्यायाङ्गत्वमिति वाच्यम् । आहार्यसंशयोपगमात् । यद्यपि प्रयोजनं न न्यायाङ्गमपि तु तज्ज्ञानं तथापि तदेव निरूपणीयं न तु ज्ञाननिरूपणापेक्षेति परप्रत्यायने दृष्टान्तस्य मूलत्वादनन्तरं दृष्टान्तस्य दृष्टान्तमूलको न्यायः सिद्धान्तविषय इत्यतोनन्तरं सिद्धान्तस्य ततश्चावसरतः सिद्धान्ताधीनस्य पञ्चावयवरूपस्य न्यायस्य ततश्चैककार्यतया न्यायसहकारिणस्तर्कस्य ततश्च तर्कजन्यतया निर्णयस्य ततश्च निर्णयानुकूलत्वाद्वादस्य जल्पस्यापि वादकार्यकारित्वादनन्तरं जल्पस्य ततश्च विजयरूपैककार्यानुकूलतया वितण्डायाः कथात्रयस्यापि दूषणसापेक्षतयाऽनन्तरं दूषणेषु निरूपणीयेषु वादे देशनीयत्वरूपोत्कर्षवत्त्वाद्धेतुवदाभासमानत्वाच्चादौ हेत्वाभासानां ततश्च हेत्वाभासोपजीवनेन छलस्य स्वव्याघातकत्वेनात्यन्तासदुत्तरत्वात् ततो जातेः कथावसानत्वेनार्थादनन्तरं निग्रहस्थानानामिति । अत्र च प्रमेयान्तःपातिबुद्धिरूपस्यापि संशयादेर्निरनुयोज्यानुयोगरूपनिग्रहस्थानान्तःपातिनोः छलजात्योश्च प्रकारभेदेन प्रतिपादनं शिष्यबुद्धिवैशद्यार्थमस्तु निग्रहस्थानान्तःपातिनां हेत्वाभासानां पृथगभिधानप्रयोजनं तु जानाति भगवानक्षपाद

पत्र। भाष्ये तु वादे देशनीयतया हेत्वाभासानां पृथगुपन्यास इत्युक्तम्। अत्र वार्त्तिकं यदि वादे देशनीयत्वात्पृथगभिधानं तदा न्यूनाधिकापसिद्धान्तानां वादे देशनीयत्वात् पृथगभिधानं स्यात् यदि पृथगभिधानाद्वादे देशनीयत्वं तदा संशयादीनामपि वादे देशनीयत्वं स्यात्। तस्मादान्वीक्षिकीत्रयीवार्तादण्डनीतिरूपविद्याप्रस्थानप्रभेदज्ञापनार्थं संशयादेर्हेत्वाभासस्य पृथग्वचनमिति तदप्यसत् निग्रहस्थानान्तर्गतत्वेनैव तन्निरूपणेन प्रस्थानभेदसंभवात्। वयं तु हेत्वाभासानां न निग्रहस्थानत्वं तथा सति सर्वत्र हेत्वाभासत्वात् सर्वस्यैव निगृहीतत्वापत्तेः तस्माद्धेत्वाभासप्रयोगो निग्रहस्थाने तद्विभाजकसूत्रस्थहेत्वाभासपदं च तत्प्रयोगपरं तत्र च प्रयोगस्य न लक्षणमपेक्षणीयमपितु हेत्वाभासानामित्यत उक्तं हेत्वाभासाश्च यथोक्ता इति चरमसूत्रम्। न च हेत्वाभासस्यावच्छेदकप्रवेशादेव न पृथङ्निरूपणापेक्षेति वाच्यम्। तथा सति प्रमाणतर्कसाधनोपालम्भ इति वादाद्यवच्छेदकप्रमाणादेरपि पृथङ्निरूपणानापत्तेरिति युक्तमुत्पश्यामः। अत्र केचित्सूत्रादौ मङ्गलाकरणेन मङ्गलं न प्रामाणिकमित्यत्र सूत्रकृतां तात्पर्यं वर्णयन्ति। तदसत् कृतस्याप्यनिबन्धनसंभवात् विघ्नाभावनिर्णयेनाकरणसंभवात्। वयं तु प्रमाणं प्राणनिलय इति भगवन्नामगणान्तःपातिप्रमाणशब्दस्योच्चारणमेव मङ्गलमिति ब्रूमः। अत्र चोद्देशलक्षणपरीक्षाणां पूर्वपूर्वसापेक्षतया प्रथममुद्देशोऽनन्तरं लक्षणं प्रसङ्गाच्छलपरीक्षेति सोद्देशपदार्थलक्षणच्छलपरीक्षा प्रथमाध्यायार्थः। तत्र च सपरिकरन्यायलक्षणं प्रथमाह्निकार्थः। तत्र च सप्रयोजनाभिधेयप्रतिपादकं प्रथमद्वितीयसूत्राभ्यामेकं प्रकरणम्। ततः प्रमाणलक्षणं ततः प्रमेयलक्षणप्रकरणं ततो न्यायपूर्वाङ्गप्रकरणं ततो न्यायाश्रयसिद्धान्तप्रकरणं ततो न्यायस्वरूपप्रकरणं ततो न्यायोत्तराङ्गप्रकरणमिति प्रथमाह्निके सप्तप्रकरणानि। श्रवणादनु पश्चादीक्षा अन्वीक्षा मननं तन्निर्वाहिका सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते तथा च न्यायो मीमांसा धर्मशास्त्राणीति श्रुतिः। पुराणन्यायमीमांसेत्यादिस्मृतिः। मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तित इति पुराणम्। त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भांश्च लोकत इति मनुः। तथा यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर इत्यादिमोक्षधर्मे तत्रोपनिषदं तावत् परिशेषं च पार्थिव मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं परामित्युपनिषदर्थं आन्वीक्षि-

क्यनुसारी ग्राह्य इत्युक्तमिति । ननु न तत्त्वज्ञानस्य साक्षादेव निःश्रेयसहेतुत्वं तत्त्वज्ञानिनामप्यनवस्थितिदर्शनादतः क्रमाकाङ्क्षायामाह ।

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥**

अत्र वार्त्तिकं निःश्रेयसं तावद् द्विविधं परापरभेदात् तत्रापरं जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव तदप्यवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धं कर्म उपभुञ्जानस्य परन्तु क्रमेण तत्र क्रमप्रतिपादनायेदं सूत्रमिति । दुःखादीनां मध्ये यदुत्तरोत्तरं तेषामपाये तदनन्तरस्य तत्सन्निहितस्य पूर्वपूर्वस्यापायादपवर्गः। प्रयोजकत्वं प्रयोज्यत्वं वा पञ्चम्यर्थः दण्डाभावाद् घटाभाव इतिवत्स्वरूपसम्बन्धविशेष एव तत् तदयमर्थः तत्त्वज्ञानेन विरोधितयापहृते मिथ्याज्ञाने कारणाभावाच्च निवृत्ते रागद्वेषात्मकदोषे तदभावाच्च प्रवृत्तेर्धर्माधर्मात्मिकाया अनुत्पत्तौ तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धस्याभावाद्दुःखाभावादपवर्गः । यद्यपि ज्ञानिनोऽपि रागादयस्तिष्ठन्ति तथाप्युत्कटरागाद्यभावे तात्पर्यम्। यद्यपि दोषाणां न धर्मादिजनकत्वं तथापि तत्तद्दोषाणां तत्तद्धर्मादिहेतुत्वाद्दोषापाये धर्माद्यपायः । वस्तुतो विनापीच्छां गङ्गाजलसंयोगादितो धर्मादिसंभवाद्व्यभिचारस्तस्मान्मिथ्याज्ञानवासनैवात्र दोषः तस्याश्च मिथ्याज्ञाननाशात् तत्कालीनतत्त्वज्ञानवासनातो वा नाश इत्यपि वदन्ति । यद्यपि दुःखापायान्नापवर्गः किन्तु स एव सः तथाप्यभेद एव तत्र पञ्चम्यर्थः । अपवर्गपदं वा तद्व्यवहारपरम् अनन्तरपदेन जन्मान्तरमेव परामृश्यत इति तु न व्याख्यानं दुःखपदवैयर्थ्यापत्तेः दुःखानुत्पत्तेश्चरमदुःखध्वंसप्रयोजकत्वं कल्प्यत इत्याशयेनेदमित्यपि कश्चित् । इति न्यायसूत्रवृत्तौ सप्रयोजनाभिधेयप्रकरणम् ।

अथ यथोद्देशं लक्षणस्यापेक्षितत्वात् प्रथमोद्दिष्टं प्रमाणं लक्षयति विभजते च ।

**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि॥ ३ ॥**

अत्र तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानं प्रशब्दविशिष्टेन माधातुना प्रत्याय्यते तत्करणत्वं प्रमाणत्वं ज्ञानं चात्रानुभवो विवक्षितस्तेन स्मृतिकरणे नातिव्याप्तिः लक्षितानां प्रमाणानां विभागः प्रत्यक्षानुमानोपमानशब्दा इति विभागस्योद्देश एवान्तर्भूतत्वादयं विशेषोद्देशः।प्रत्येकलक्षणं तु वक्ष्यते॥

इति त्रिसूत्रीवृत्तिः समाप्ता ॥

अथ विभक्तानि यथाक्रमं लक्षयितुमारभते ।

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

अत्र प्रतिगतमक्षं प्रत्यक्षमिति योगादिन्द्रियवाचकत्वात् प्रत्यक्षशब्दस्य प्रस्तुतत्वाच्च करणलक्षणस्य प्रमितिलक्षणं यद्यप्यनुचितं तथापि यत इत्यध्याहारेण प्रत्यक्षप्रमाकरणलक्षणे वाच्ये तदेकदेशप्रमास्वरूपे ज्ञाते तत्करणत्वं सुज्ञेयमित्याशयेन वा सङ्गमनीयम् । आत्ममनःसंयोगजन्यसुखादिवारणाय ज्ञानमिति यद्यपि तज्जन्यत्वाज्ज्ञानमात्रेऽतिव्याप्तिरीश्वरप्रत्यक्षे चाव्याप्तिस्तथापि साक्षात्करोमीत्यनुव्यवसायसिद्धसाक्षात्त्वजात्यवच्छिन्नं ज्ञानमित्यन्तस्य तात्पर्यं यद्वा इन्द्रियार्थसन्निकर्षोत्पन्नमिति सावधारणमिन्द्रियार्थसन्निकर्षातिरिक्तादुत्पन्नम् अतिरिक्तं चात्र ज्ञानं तेन ज्ञानाकरणमित्यर्थः । भ्रमवारकमव्यभिचारि भ्रमभिन्नमित्यर्थः । इदं चांशिकभ्रमस्यालक्ष्यत्वे तल्लक्ष्यत्वे तु तद्वति तत्प्रकारत्वं निर्विकल्पस्य लक्ष्यत्वे तदभाववति तदप्रकारकत्वमित्यर्थः । तस्य विभागः अव्यपदेश्यं व्यवसायात्मकमिति निर्विकल्पकं सविकल्पकं चेति द्विविधं प्रत्यक्षमित्यर्थः । सविकल्पकं च संस्कारोद्भवत्वतदनुद्भवत्वाभ्यां विभजते ।

संस्कारोद्भवा प्रत्यभिज्ञा ॥ ५ ॥

अनुमानं लक्षयति विभजते च ।

अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च ॥ ६ ॥

आनन्तर्यवाचकोऽथशब्दो हेतुहेतुमद्भावसङ्गतिसूचनाय तत्पूर्वकं प्रत्यक्षं प्रत्यक्षविशेषो व्याप्त्यादिविषयकस्तेन व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वं लभ्यते अनुमानमनुमितिः यत इत्यध्याहारेण च करणलक्षणम् अथवा करणमेवेदं तत्रानुमानमिति करणल्युटा अनुमितिकरणमिति समाख्याबलादेव लब्धं तच्च व्याप्तिज्ञानं प्रत्यक्षपूर्वकं सहचारप्रत्यक्षपूर्वकं विभजते त्रिविधमिति पूर्वं कारणं तद्वत् तल्लिङ्गकं यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानं शेषः कार्यं तल्लिङ्गकं शेषवत् यथा नदीवृद्ध्या वृष्ट्यनुमानं सामान्यतोदृष्टं कार्यकारणभिन्नलिङ्गकं यथा पृथिवीत्वेन द्रव्यत्वानुमानम् अथवा

पूर्वमन्वयस्तद्वत्केवलान्वयीत्यर्थः यथा अभिधेयं प्रमेयत्वादित्यादि शेषो व्यतिरेकी यथा वह्निमान् धूमादित्यादि ।

उपमानं लक्षयति ॥

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ७ ॥**

प्रसिद्धस्य पूर्वप्रमितस्य गवादेः साधर्म्यात् सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुपमानमुपमितिर्यत इत्यध्याहारेण च करणलक्षणम् । अथवा साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम् अत्र च वैधर्म्योपमितिमपि मन्यन्ते टीकाकृतः यथाऽतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्रे करभपदवाच्यताग्रहः एवमन्योऽप्युपमानस्य विषय इति भाष्यम् तथा च मुद्गपर्णीसदृशी ओषधी विषहन्त्रीत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते इयमोषधी विषहरणीति उपमित्या विषयीक्रियत इत्यादि ।

शब्दं लक्षयति ।

**आप्तोपदेशः शब्दः ॥ ८ ॥**

शब्द इति लक्ष्यकथनं तदर्थः प्रमाणशब्द इति आप्तोपदेश इति लक्षणम् आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान् तस्योपदेश इत्यर्थः । प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्दः इति फलितार्थः अथवा आप्तो यथार्थ उपदेशः शाब्दबोधो यस्माच्छाब्दत्वं च जातिविशेषः तथा च यथार्थशाब्दज्ञानकरणत्वमर्थः अत्र च विशेष्यावृत्त्यप्रकारकत्वतद्वतितत्प्रकारकत्वादिप्रमालक्षणानामेकं लक्षणे परं च लक्ष्यतावच्छेदके निवेशनीयमतो नाभेदः ।

विभजते ॥

**स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ९ ॥**

शब्दपूर्वक उपनीतभानादिस प्रमाणशब्दः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः शब्दतदुपजीविप्रमाणमात्रगम्यार्थकोऽदृष्टार्थकः तथा च दृष्टार्थकत्वादृष्टार्थकत्वभेदात्प्रमाणशब्दस्य द्वैविध्यमित्यर्थः ।

प्रमाणलक्षणप्रकरणं समाप्तम् ॥ २ ॥

प्रमेयं विभजते लक्षयति च ।

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ १० ॥**

अत्र तुशब्दः पुनरर्थे तथा चैतेषां पुनः प्रमेयत्वं न तु प्रमाविषयत्वेन संयोगादीनामपि, प्रमेयशब्दो हि वादादिशब्दवत् परिभाषाविशेषेण द्वादशसु प्रवर्त्तते तत्र च प्रकृष्टं मेयं प्रमेयम् इति योगार्थः प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वं मोक्षहेतुधीविषयत्वं वा रूढ्या च तावदन्यान्यत्वमर्थः लक्षणमपि तदेव प्रमेयं किमित्याकाङ्क्षायाम् आत्मादयो दर्शिता इत्यतो वचनभेदे ऽपि नानन्वयः वेदाः प्रमाणमित्यादावप्येवम्। अन्यथा आत्मसूत्रे विगतिः स्यात् तथा च वक्ष्यते प्रमेयत्वेनैक्यमिति प्रतिपादनाय अन्यतमाज्ञाने ऽपि नापवर्ग इति प्रतिपादनाय वा प्रमेयमित्येकवचनमित्यन्ये तच्चिन्त्यम्। अत्रापि आत्मा च शरीरं च इन्द्रियाणि चार्थाश्च बुद्धिश्च मनश्च प्रवृत्तिश्च दोषाश्च प्रेत्यभावश्च फलं च दुःखं चापवर्गश्चेति यथावचनं विग्रहं वर्णयन्ति। अत्र प्राधान्यात्कारणरूपप्रमेयषट्कमभिधाय कार्यरूपप्रमेयषट्कमभिहितम् तत्रतत्र पूर्वपूर्वस्य प्राधान्यात् प्रथममुद्देश इति वदन्ति।

तत्र प्रथमोद्दिष्टमात्मानं लक्षयति।

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् ॥ ११ ॥**

अत्र चात्मनः प्रत्यक्षत्वाल्लिङ्गकथनमसङ्गतम्। न च शरीरातिरिक्तिव्युत्पादनार्थं तदिति वाच्यम् अग्रिमपरीक्षावैयर्थ्यापत्तेः। लक्षणाकथनेन न्यूनत्वं चेति चेन्न लिङ्गपदस्य लक्षणार्थत्वात्। न च लिङ्गमित्येकवचनेन मिलितानां लक्षणत्वं प्रतीयते तच्चायुक्तं वैयर्थ्यादिति वाच्यं किं लक्षणमित्याकाङ्क्षायामिच्छादीनामभिधानान्मिलितं लक्षणमिति प्रत्ययकाभावात्। तथा च प्रत्येकमेव लक्षणम् अत्र ज्ञानेच्छाप्रयत्नानामात्ममात्रस्य लक्षणत्वं न तु सुखदुःखद्वेषाणां संसारिणो लक्षणत्वादिति।

क्रमप्राप्तं शरीरं लक्षयति॥

**चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ १२ ॥**

अत्र चेष्टादिमिलिताश्रयत्वं न लक्षणं वैयर्थ्यादपित्वाश्रयपदस्य प्रत्येकमन्वयश्चेष्टाश्रयत्वादिलक्षणत्रये तात्पर्यं चेष्टात्वं च प्रयत्नजन्यतावच्छेदको जातिविशेषः न च शरीरावयवे ऽतिव्याप्तिः अन्त्यावयवित्वेन विशेषणात् न च निष्क्रियविनष्टशरीरे ऽव्याप्तिस्तादृशे मानाभावात् अत एवाह इति इन्द्रियाश्रयत्वं च अवच्छेदकताख्यस्वरूपसम्बन्धः

विशेषेण चक्षुष्मान् देवदत्तोऽयमित्यादिप्रतीतेः अर्थाश्रयत्वमित्यत्रार्थशब्दो न रूपादिपर-स्तदाश्रयत्वस्य घटादावतिव्याप्तेः किन्तु सुखदुःखान्यतरपरः अत एव भाष्यं यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते स एषामाश्रयस्तच्छरीरमिति, वस्तुतस्तु अन्यतराश्रयत्वमपि न लक्षणं किन्तु सुखाश्रयत्वं दुःखाश्रयत्वं चेति लक्षणद्वये तात्पर्यं शरीरस्य तदाश्रयत्वमवच्छेदकतासंबन्धेन हस्तादेरलक्ष्यत्वे त्वन्त्यावयवित्वेन विशेषणीयं स्वर्गिशरीरे नारकिशरीरे वृक्षादौ च सुखदुःखस्वीकारान्नाव्याप्तिः, न च तच्छून्यखण्डशरीरे व्याप्तिःसुखाद्याश्रयवृत्तिद्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात् तादृशजातिश्च मनुष्यत्वचैत्रत्वादिः कल्पभेदेन नरसिंहशरीराणां भेदान्नरसिंहत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वय इति ।

इन्द्रियं विभजते लक्षयति च ।

## घ्राण-रसन-चक्षु-स्त्वक्-श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥

यद्यपि मनसो पीन्द्रियत्वमस्त्येव तथापि घ्राणत्वादेरुपलक्षणपरत्वान्न दोषः वस्तुतस्त्विन्द्रियाणीत्यस्य बहिरिन्द्रियाणीत्यर्थः तेन भूतेभ्य इत्यस्य नासङ्गतिः । अत्र चैतानि इन्द्रियाणीति वदता घ्राणाद्यन्यान्यत्वं लक्षणमिति सूचितं प्रत्यक्षजनकतावच्छेदकतया इन्द्रियत्वम् अखण्डोपाधिरूपमित्यन्ये घ्राणत्वादिकं जातिविशेषरूपं कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं घ्राणादीनि किंप्रकृतिकानीत्याकाङ्क्षायाम् आह भूतेभ्य इति तेनेन्द्रियाणामहंकारप्रकृतिकत्वं नेति मन्तव्यम् । व्युत्पादयिष्यते चेदं तृतीयाध्याये अत्र घ्राणादीनां चतुर्णां पृथिव्यादिजन्यत्वं संभवति श्रोत्रस्य कर्णशष्कुल्यवच्छिन्नाकाशस्य कर्णशष्कुल्या जन्यत्वादेव जन्यत्वव्यपदेशः अथ वा अभिन्नानीति पूरयित्वा भूताभिन्नानीति व्याख्येयं घ्राणादीत्यस्योपलक्षणपरत्वे तु भूतेभ्य इति बहिरिन्द्रियपरम् ।

भूतान्येव कानीत्याकाङ्क्षायाम् आह ।

## पृथिव्यापस्तेजोवायुराकाशमिति भूतानि ॥ १४ ॥

आरम्भे परस्परानपेक्षत्वसूचनायासमासकरणं भूतत्वं तु बहिरिन्द्रियग्रहणयोग्यविशेषगुणवत्वम् पृथिवीत्वादयस्तु जातिविशेषा इति ।

क्रमप्राप्तमर्थं विभजते लक्षयति च ॥

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥१४॥**

वैशेषिकाणां द्रव्यगुणकर्मस्वर्थशब्दाभिधेयत्वमतः पञ्चानां गन्धादीनामेव कथं तत्त्वमित्याशङ्कानिरासाय तदित्युक्तं तेषाम् इन्द्रियाणामर्था विषया उद्दिष्टा अपि तु एवेत्याशयः इत्थं च तदर्थत्वम् लक्षणमिति मन्तव्यम् तच्छब्देन बहिरिन्द्रियाणि परामृश्यन्ते तथा चैकैकबहिरिन्द्रियमात्रग्राह्यविशेषगुणत्वं बहिरिन्द्रियद्वयाग्राह्यबहिरिन्द्रियग्राह्यगुणत्वं वा तदर्थः पृथिव्यादिगुणा इति लक्ष्यनिर्देशास्ते के गुणा इत्याकाङ्क्षायां गन्धेत्यादि पृथिव्यादीनां गुणा इति षष्ठीसमासो भाष्यादिसंमतस्तेन गुणगुणिनोरभेदो नेति सूचितम् ।

बुद्धिं लक्षयितुमाह ।

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १६ ॥**

अनर्थान्तरं समानार्थकं न तु साङ्ख्यानामिव बुद्धितत्त्वस्य महत्त्वापरपर्यायस्य परिणामविशेषो ज्ञानं यथा चैतत् तथा वक्ष्यते तथा च बुद्ध्यादिपदवाच्यत्वमनुभवसिद्धज्ञानत्वजातिरेव वा लक्षणमिति भावः ।

मनो लक्षयति ।

**युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥१७॥**

युगपदेककाले एकात्मनीति पूरणीयं ज्ञानानामनुत्पत्तिर्यतः स एव धर्मो ज्ञानकरणाणुत्वं मनसो लिङ्गं लक्षणमित्यर्थः तथाहि चक्षुरादिषु विषयसंबद्धेष्वपि यस्यासन्निधानादेकं न ज्ञानं जनयति तत्सबन्धादपरं च ज्ञानं जनयति तदेवास्तु निखिलज्ञानजनकं सुखादिसाक्षात्कारासाधारणकारणम् तदेकमेव लाघवात् सिद्धं मन इत्यर्थः एवमव्याख्याने च लक्षणप्रकरणे प्रमाणोपन्यासोऽसंगतः स्यादिति । अन्ये तु सति धर्मिणि लक्षणचिन्तेत्यतो मनःसाधनाय युगपदिति सूत्रम् इत्थं च मनःसिद्धौ निःस्पर्शाणुत्वादिकं लक्षणं सुकरमित्याशय इति वदन्ति ।

प्रवृत्तिं लक्षयति विभजते च ।

**प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ॥ १८ ॥**

अत्र च प्रवृत्तित्वम् रागजन्यतावच्छेदको जातिविशेषः स एव लक्षणम् । ईश्वरकृतेरपि लक्ष्यत्वे यत्नत्वमेव तथा जीवनयोनियत्ने निवृत्तौ च मानाभावात्तत्सद्भावेपि प्रवृत्तित्वम् नित्ययत्नसाधारणं तद्व्या-

वृत्तं वा तथा द्वन्द्वानन्तरश्रुतारम्भपदस्य प्रत्येकमन्वयाद्वागारम्भादि-भेदेन त्रिविधा प्रवृत्तिः बुद्धिशब्देनात्र मनोऽभिप्रेतमिति भाष्यं शरीर-शब्दश्च चेष्टावत्त्वेन हस्तादिसाधारणस्तथा वचनानुकूलो यत्नो वागा-रम्भः वचनाननुकूलः शरीरगोचरोयत्नश्चेष्टानुकूलयत्नो वा शरीरारम्भः एतद्वयभिन्नो यत्नो बुद्ध्यारम्भः स च ध्यानदयादेवदर्शनाद्यनुकूलः पर्य-वस्यति प्राञ्चस्तु सामान्यविशेषलक्षणेष्वदृष्टजनकत्वं निवेशयन्ति इयं च कारणरूपा प्रवृत्तिः कार्यरूपा तु धर्माधर्मात्मिकेति ।

दोषं लक्षयति ।

**प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥**

दोषा इति बहुवचनं रागद्वेषमोहात्मकलक्ष्यत्रयज्ञापनाय प्रवर्त्तना प्रवृत्तिजनकत्वं तदेव लक्षणं येषाम् यद्यपीदम् शरीरादृष्टेश्वरेच्छा-दावतिव्याप्तं तथापि मानसप्रत्यक्षविषयत्वे सतीति विशेषणीयम् यागा-दिगोचरप्रमावारणाय प्रमान्यत्वे सतीति विशेषयन्ति ।

प्रेत्यभावं लक्षयति ।

**पुनरुत्पत्तिः प्रेत्यभावः ॥ २० ॥**

प्रेत्य मृत्वा भावो जननं प्रेत्यभावः तत्र पुनरित्यनेनाभ्यासकथनात् प्रागुत्पत्तिस्ततो मरणं तत उत्पत्तिरिति प्रेत्यभावो यमनादिरपवर्गान्तः एतज्ज्ञानं च वैराग्य उपयुज्यते तेन प्रेत्येति न व्यर्थम् तदीयमरणं च तदीयजीवनादृष्टनाशस्तदीयश्चरमप्राणसंयोगध्वंसस्तदीयः प्राणध्वंसो वा । तदीयोत्पत्तिस्तु तदीयविजातीयशरीराद्यप्राणसंयोग इति ।

फलं लक्षयति ।

**प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २१ ॥**

अत्र च मुख्यं फलं सुखदुःखोपभोगः तथा च भाष्यं सुखदुःख-संवेदनं फलम् तत्र च धमाधर्मात्मकप्रवृत्तेः प्रयोजकत्वात्तत्र दोषस्य हेतुत्वात् प्रवृत्तिदोषजनित इत्युक्तम् लक्षणं तु सुखदुःखान्यतरसाक्षा-त्कार इति गौणं फलं तु शरीरादिकं सर्वमेव तथा च भाष्यं तत्पुनर्देहे-न्द्रियबुद्धिषु सतीषु भवतीति सह देहेन्द्रियादिभिः फलमभिप्रेतम् तथाहि प्रवृत्तिदोषजनितोऽर्थः फलमेतत्सर्वं भवतीति इत्थं च जन्यत्वमेव फलत्वं प्रवृत्तिदोषजनित इति तु निर्वेदोपयोगादुक्तम् ।

दुःखं लक्षयति ।

## बाधनालक्षणं दुःखम् ॥ २२ ॥

बाधना पीडा तदेव लक्षणं स्वरूपं यस्य तथा चानुभवसिद्धदुःखत्वजातिरेव लक्षणम् शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् सुखे च दुःखानुषङ्गाद् दुःखव्यवहारो गौण इति अत एवाग्रिमसूत्रे तत्पदेन मुख्यदुःखपरामर्शः ।

अपवर्गं लक्षयति ।

## तदत्यन्तविमोक्षो ऽपवर्गः ॥ २३ ॥

तस्य दुःखस्यात्यन्तविमोक्षः स्वसमानाधिकरणदुःखासमानकालीनो ध्वंसः तस्य च जन्मापायादेव संभव इत्याशयेन दुःखेन जन्मनात्यन्तविमुक्तिरपवर्ग इति भाष्यम् दुःखेन दुःखानुषक्तेनेत्यर्थः प्रमेयलक्षणप्रकरणम् ।

क्रमप्राप्तं संशयं लक्षयति ।

## समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥२४॥

संशय इति लक्ष्यनिर्देशः विमर्श इत्यत्र विशब्दो विरोधार्थः मृशिर्ज्ञानार्थः एकस्मिन् धर्मिणीति पूरणीयम् तेनैकस्मिन् धर्मिणि विरोधेन भावाभावप्रकारकज्ञानं संशयः तत्र कारणमुखेन विशेषलक्षणान्याह समानेत्यादि उपपत्तिर्ज्ञानं तथा च समानस्य विरुद्धकोटिद्वयसाधारणधर्मस्य ज्ञानादित्यर्थः अनेकधर्मः असाधारणधर्मः तज्ज्ञानादित्यर्थः तथा च साधारणधर्मवद्धर्मिज्ञानजन्यो ऽसाधारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थः विप्रतिपत्तिर्विरुद्धकोटिद्वयोपस्थापकश्शब्दस्तस्मादित्यर्थः यद्यपि शब्दस्य न संशायकत्वं तथापि शब्दात्कोटिद्वयोपस्थितौ मानसः संशय इति वदन्ति उपलब्धेर्ज्ञानस्यानुपलब्धेर्व्यतिरेकज्ञानस्य या ऽव्यवस्था सद्विषयत्वानिर्धारणम् प्रामाण्यसंशय इति फलितो ऽर्थः अन्ये तु उपलब्ध्यव्यवस्था प्रामाण्यसंशयः अनुपलब्धिरुपलब्धिविरोधि भ्रमत्वम् तदव्यवस्था तत्संशय इत्याहुः वस्तुतस्तु प्रामाण्यसंशयस्य न संशयहेतुत्वं किन्तु अगृहीताप्रामाण्यकज्ञानस्य विरोधितया सति प्रामाण्यसंशये तज्ज्ञानस्याविरोधितया साधारणधर्मदर्शनादित एव संशयोत्पत्तेरिति उपलब्धीत्यादिकं तादृशस्थले संशयो भवतीत्येतावन्मात्रपरम्

चकारो व्याप्यसंशयस्य व्यापकसंशयहेतुत्वं समुच्चिनोतीति वदन्ति विशेषापेक्षः कोटिस्मरणसापेक्षः वस्तुतस्तु संशयस्य धारावाहिकत्वं स्यादत आह विशेषेति । विशेषं विशेषदर्शनमपेक्षते निवर्त्तकत्वेन तथा च विशेषदर्शननिवर्त्यत्वकथनमुखेन विशेषादर्शनजन्यः संशय इत्युक्तम् ।

क्रमप्राप्तं प्रयोजनं लक्षयति ।

**यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनम् ॥ २५ ॥**

अधिकृत्य उद्दिश्य तथा च प्रवृत्तिहेत्विच्छाविषयत्वं तत्वम् विषयत्वम् साध्यताख्यविषयताविशेषस्तेन सुखत्वादिवारणम् प्रवृत्तिहेत्विति स्वरूपकथनम् तक्षकचूडामणिसुमेर्वादिप्राप्तिवारकत्वादिति केचित् अत्र च निरुपाधीच्छाविषयत्वात् सुखदुःखाभावयोर्मुख्यम् प्रयोजनत्वं तदुपायस्य तु तदिच्छाधीनेच्छाविषयत्वाद् गौणप्रयोजनत्वमिति ।

दृष्टान्तं लक्षयति ।

**लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २६ ॥**

लौकिकोऽप्राप्तशास्त्रपरिशीलनजन्मबुद्धिप्रकर्षः प्रतिपाद्य इति फलितार्थः परीक्षकः शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः प्रतिपादक इति फलितार्थः तथा च प्रतिपाद्यप्रतिपादक इति फलितार्थः तथा च प्रतिपाद्यप्रतिपादकयोरिति पर्यवसन्नम् बहुवचनं कथाबहुत्वमपेक्ष्येति टीका वस्तुतो लौकिकयोः परीक्षकयोरित्यर्थाद्युक्तमेव बहुवचनम्, बुद्धिसाम्यमिति बुद्धेः साध्यसाधनोभयवत्त्वविषयिण्यास्तदभावविषयिण्या वा साम्यमविरोधो यस्मिन्नर्थे स दृष्टान्तः । वादिप्रतिवादिनोः साध्यसाधनोभयवत्त्वप्रकारकतदभाववत्त्वप्रकारकान्यतरनिश्चयविषयो दृष्टान्त इति पर्यवसितोऽर्थः समाप्तं न्यायपूर्वाङ्गप्रकरणम् ।

क्रमप्राप्तं सिद्धान्तं लक्षयति ।

**तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २७ ॥**

तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकतया यस्य तादृशो योऽभ्युपगमस्तस्य समीचीनतयाऽसंशयरूपतया स्थितिस्तथा च शास्त्रितार्थनिश्चयस्सिद्धान्तः अत्र चाभ्युपगम्यमानोऽर्थः सिद्धान्त इति भाष्यम्

अभ्युपगमः सिद्धान्त इति वार्तिकटीके न चात्र विरोधश्शङ्क्यः आचार्यैः परिहृतत्वात् तथा च त्रिसूत्रीनिबन्धः अर्थाभ्युपगमयोर्गुणप्रधानभावस्य विवक्षातन्त्रत्वादर्थाभ्युपगमो ऽभ्युपगम्यमानो वार्थः सिद्धान्तस्तेन सूत्रभाष्यवार्तिकटीकासु न विरोधः अत्र च भाष्यानुसारात् सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तान्यतमस्सिद्धान्त इति सूत्रार्थ इति तु न युक्तम् अग्रिमसूत्रानुत्थानापत्तेः तन्त्रसिद्धान्तत्वेन द्वयमनुगमय्य तन्त्राधिकरणाभ्युपगमान्यतमः सिद्धान्त इति कश्चित्।

विभजते।

**सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २८ ॥**

स चतुर्विध इति शेषः सर्वतन्त्रादिसंस्थितीनामर्थान्तरभावाद् भेदादित्यर्थः।

सर्वतन्त्रसिद्धान्तं लक्षयति।

**सर्वतन्त्राविरुद्धस्तन्त्रे ऽधिकृतस्सर्वतन्त्रसिद्धान्तः ॥२९॥**

सर्वतन्त्राविरुद्धः सर्वशास्त्राभ्युपगत इति बहवः वस्तुतो यथाश्रुत एवार्थः अन्यथा तन्त्रे ऽधिकृत इत्यस्य वैयर्थ्यापत्तेरत एव च जात्यादेरसदुत्तरत्वमपि सर्वतन्त्रसिद्धान्तः न च तन्त्रे ऽधिकृत इति स्पष्टार्थं लक्षणे तु न देयमेवेति वाच्यम् मनस इन्द्रियत्वस्य सर्वतन्त्रसिद्धान्ततापत्तेः नव्यास्तु सूत्रस्योपलक्षणमात्रत्वाद्वादिप्रतिवाद्युभयाभ्युपगतः कथानुकूलो ऽर्थः स इति वदन्ति।

प्रतितन्त्रसिद्धान्तं लक्षयति।

**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः॥३०॥**

समानशब्द एकार्थस्तेनैकतन्त्रसिद्ध इत्यर्थः स्वतन्त्रसिद्ध इति पर्यवसितार्थः तथा च वादिप्रतिवाद्येकतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्त इति फलितार्थः यथा मीमांसकानां शब्दनित्यत्वम्।

अधिकरणसिद्धान्तं लक्षयति।

**यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥३१॥**

यस्यार्थस्य सिद्धौ जायमानायामेवान्यप्रकरणस्य प्रस्तुतस्य सिद्धिर्भवति सो ऽधिकरणसिद्धान्त इत्यर्थः यथानन्तद्व्यणुकादिकस्य पक्षीकृत्योपादानगोचरज्ञानचिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्व-

मीश्वरस्य एवं हेतुबलादपि यथा दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिन्द्रियादिव्यतिरिक्त आत्मनि साधिते इन्द्रियनानात्वम् तथा च यदर्थसिद्धिं विना योर्थः शब्दादनुमानाद्वा न सिध्यति सो धिकरणसिद्धान्त इति तत्र तत्र विशिष्यैव लक्षणं कार्यम् वस्तुतस्तु शाब्दत्वमनुमानत्वं चाविवक्षितं प्रमाणमात्रमपेक्षितम् अत एव प्रत्यक्षेण स्थूलत्वसाधनानन्तरमुक्तमात्मतत्वविवेके । सोऽयमधिकरणसिद्धान्तन्यायेन स्थूलत्वसिद्धौ क्षणभङ्गभङ्ग इति । तत्र वाक्यार्थसिद्धौ तदनुषङ्गी योर्थः सोधिकरणम् इति वार्त्तिकफक्किकां लिखित्वा येन केनापि प्रमाणेन वाक्यार्थसिद्धौ जयमानायां योर्थः सिध्यति स तथेत्यर्थ इति व्याख्यानं दीधितिकृता एवं हेतुरीदृशः पक्षश्च वाक्यार्थ इति टीकावचने चोपलक्षणमेतदित्युक्तम् । यत्तु जनकीभूतव्यापकताज्ञाने व्यापककोटावविषयः प्रकृतानुमित्या व्यापककोटौ विषयीभूतः शाब्दजनकपदार्थज्ञानाविषयत्वे सति शाब्दविषयश्चेति द्वयमधिकरणसिद्धान्त इति तन्न इन्द्रियनानात्वादौ भाष्याद्युदाहृते ऽव्याप्तेरिति ।

अभ्युपगमसिद्धान्तं लक्षयति ॥

**अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३२ ॥**

अपरीक्षितस्य साक्षादसूत्रितस्य विशेषपरीक्षणम् विशेषधर्मकथनम् अभ्युपगमादिति ज्ञापकत्वे पञ्चमी अभ्युपगमज्ञापकमित्यर्थः । विशेषपरीक्षया ज्ञायते सूत्रकृतोऽभ्युपगतमिदमिति तथा च साक्षादसूत्रिताभ्युपगमो ऽभ्युपगमसिद्धान्तः यथा मनस इन्द्रियत्वमिति । समाप्तं न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ।

क्रमप्राप्तान् अवयवाँल्लक्षयितुं विभजते ॥

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३३ ॥**

अनेन विभागेन प्रतिज्ञाद्यन्यतमत्वमवयवत्वमिति लक्षणं सूचितम् । अत्र प्रतिज्ञादीनां पञ्चानामवयवत्वकथनाद्, दशावयवत्ववादो व्युदस्त इति मन्तव्यम् ते च यथा दर्शिताः भाष्ये जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्चेति एते प्रतिज्ञादिसहिता दश व्याख्याताश्चैते तात्पर्यटीकायां प्रयोजनं हानादिबुद्धयः तत्प्रवर्तिका

जिज्ञासा तज्जनकः संशयः शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यं संशयव्युदासस्तर्कः अयमेवार्थो निबन्धे निष्टङ्कितः जिज्ञासा विप्रतिपत्तिरिति कश्चित् । एतेषां च न न्यायावयवत्वं न्यायाघटकत्वात् न वा न्यायजन्यबोधानुकूलत्वेनैवावयवत्वमीतिप्रसङ्गात् प्रयोजनाव्याप्तेश्च—
प्रतिज्ञां लक्षयति ।

## साध्यनिर्देशः प्रतिज्ञा ॥ ३४ ॥

साधनीयस्यार्थस्य यो निर्देशः स प्रतिज्ञा साधनीयश्च वह्निमत्त्वादिना पर्वतादिः तथा च पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधकः शब्द इत्यर्थः निगमनवारणाय च साध्यांशे साध्यतावच्छेदकातिरिक्ताप्रकारकत्वं वाच्यं तदर्थश्च साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वम् तेन प्रमेयवतः साध्यत्वे नाप्रसिद्धिः उदासीनवाक्यवारणाय च न्यायान्तर्गतत्वेन विशेषणीयम् न्यायत्वं च धातुत्वादिवत् परिभाषाविशेषविषयत्वं तत्तदानुपूर्वीकपदकदम्बत्वादिकं वा तथा च न्यायान्तर्गतत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतसाध्यबोधजनकत्वम् तत्प्रतिज्ञात्वावयवत्वादिकं परिभाषाविशेषविषयत्वरूपं तत्तद्व्यक्तिरूपं वेत्यपि वदन्ति ।

क्रमप्राप्तं हेतुं लक्षयति विभजते च सूत्राभ्याम् ।

## उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः ॥३५॥

## तथा वैधर्म्यात् ॥ ३६ ॥

अत्र साध्यसाधनं हेतुरिति सामान्यलक्षणम् साध्यसाधनं साध्यसिद्ध्यनुकूलज्ञापकत्वबोधक इत्यर्थः यथाच साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकः साध्यान्वितस्वार्थबोधको ऽवयव इति फलितार्थः तस्य द्वैविध्यमाह उदाहरणसाधर्म्यात् तथा वैधर्म्यादिति साधर्म्यमन्वयः वैधर्म्यं व्यतिरेकः ताद्दशव्याप्तिरिति फलितार्थः उदाहरणसाधर्म्यमुदाहरणवाच्यान्वयव्याप्तिस्ततो न्वयी हेतुर्ज्ञातव्यः उदाहरणेति स्पष्टार्थम् तथा च ज्ञातान्वयव्याप्तिकहेतुबोधको हेत्ववयवः अज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयव इति फलितार्थः एवमप्रतीतान्वय-

प्राप्तः। अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति परिभाषया न भवति। ङेप्रथमयोरित्यत्र मकारान्तरं प्रश्लिष्य अम् मान्त एवावशिष्यते न तु विक्रियत इति व्याख्यानाद्वा॥

त्वाहौ सौ। ७। २। ९४॥

युष्मदस्मदोर्मपर्यन्तस्य त्वाहावादेशौ स्तः सौ परे। त्वम्। अहम्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्॥

तुभ्यमह्यौ ङयि। ७। २। ९५॥

अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्॥

तवममौ ङसि। ७। २। ९६॥

अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि। तव। मम। परमतव। परममम। अतितव। अतिमम॥

त्वमावेकवचने। ७। २। ९७॥

एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ। त्वाम्। माम्। त्वया। मया। त्वत्। मत्। त्वयि। मयि॥

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी।
समासार्थोऽन्यसंख्यश्चेत्स्तो युवावौ त्वमावपि॥ १॥
सुजस्ङेङस्सु परत आदेशाः स्यु सदैव ते।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि॥ २॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः॥ ३॥

द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।

तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ॥ ४ ॥

त्वां मां वा अतिक्रान्त इति विग्रहे अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् । अतिमाम् । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वभ्यम् । अतिमभ्यम् । ङसिभ्यसोः । अतित्वत् । अतिमत् । भ्यासि प्राग्वत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वासु । अतिमासु । युवामावां वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअम्औट्सु । अअतियुवाम् । अत्यावाम् । त्रीणि वचनानि तुल्यानि । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवाभिः । अत्यावाभिः । भ्यसि । अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसोः । अतियुवत् । अत्यावत् । ओसि । अतियुवयोः । अत्यावयोः । अतियुवाकम् । अत्यावाकम् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु । युष्मानस्मान् वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअम्औट्सु अतियुष्मान् । अत्यस्मान् । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् । अत्यस्माभ्याम् । अतियुष्माभिः । अत्यस्माभिः । अतियुष्मभ्यम् । अत्यस्मभ्यम् । ङसिभ्यसोः । अतियुष्मत् । अत्यस्मत् । ओसि अतियुष्मयोः । अत्यस्मयोः । अतियु-

ष्माकम्। अत्यस्माकम्। अतियुष्मयि। अत्यस्मयि। अतियुष्मासु। अत्यस्मासु॥

## प्रत्ययोत्तरपदयोश्च। ७। २। ९८॥

मपर्यन्तयोरनयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च। त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः॥

## त्रिचतुरोः स्त्रियान्तिसृचतसृ। ७। २। ९९॥

स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः॥ तिस्रः। चतस्रः २ तिसृभिः। चतसृभिः। तिसृभ्यः २। चतसृभ्यः २। आमि नुमचिरेतिनुट्। नतिसृचतसृ इति दीर्घो न। तिसृणाम्। चतसृणाम्। तिसृषु। चतसृषु। स्त्रियां किम्। त्रयः। चत्वारः। त्रीणि। चत्वारि। स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह। प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः मतिवत्। आमि प्रियत्रयाणामिति विशेषः। प्रियास्तिस्रो यस्येति विग्रहे तु प्रियतिसा। प्रियतिस्रः। प्रियतिस्रमित्यादि। प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि। स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः। नलुमतेति निषेधस्यानित्यत्वात्पक्षे प्रियतिसृ। भाष्योदाहरणप्रामाण्याद्वादेशात् पूर्वविप्रतिषेधेन नुम्। प्रियतिसृणी। प्रियतिसृणि। तृतीयादिषु पुंवद्भावविकल्पात्पर्यायेण नुमभावौ। प्रियतिस्रा। प्रियतिसृणा इत्यादि। एवं प्रियचतस्रा इत्यादि। नद्यृतश्चेति कप् न। विभक्त्याश्रयत्वेन तिसृचतसृभावस्य बहिरङ्गत्वात्॥ तिसृभावे संज्ञायां कन्युपसंख्यानम्॥ *॥ तिसृका नाम ग्रामः॥

## अचि र ऋतः । ७ । २ । १०० ॥

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि ॥ गुणदीर्घोत्वानामपवादः । तिस्रश्चतस्रस्तिष्ठन्ति । तिस्रश्चतस्रः पश्य । प्रियतिस्रः प्रियचतस्रः आगतः ॥

## जराया जरसन्यतरस्याम् । ७ । २ । १०१ ॥

जराशब्दस्य जरस्वा स्यादजादौ विभक्तौ ॥ जरसौ । शीभावात्परत्वाज्जरस् । आमि नुटः परत्वाज्जरस् । जरसामित्यादि । पक्षे रमावत् । इह । पूर्वविप्रतिषेधेन शीभावं प्रति सन्निपातपरिभाषाया अनित्यतां चाश्रित्य जरसी इति केचिदाहुस्तन्निर्मूलम् । यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्तत्वमाश्रित्य ओङ आपः आङि चापः याडापः ह्रस्वनद्यापः ङेरामिति पञ्चापि विधयः प्राप्ताः । एवं नस्त्रिष्वप्युत्सु । तथापि । अमल्विधावित्युक्तेर्न भवन्ति । आ आबिति प्रश्लिष्य आकाररूपस्यैवापः सर्वत्र ग्रहणात् । एवं हल्ङ्याप्भ्य इति सूत्रेपि आ आप् ङी ई इति प्रश्लेषादतिखट्वः निष्कौम्बिरित्यादिसिद्धे दीर्घग्रहणं प्रत्याख्येयम् । न चैवमप्यतिखट्वायेत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वञ्चाश्रित्य याट् स्यादिति वाच्यम् । आबन्तं यदङ्गं ततः परस्य याड्विधानात् । उपसर्जनस्त्रीप्रत्यये तदादिनियमात् । पदाङ्गाधिकारे तस्य तदन्तस्य च । अनेकाल्त्वात्सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति । एकादेशशविकृतस्यानन्यत्वाज्जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः । इनादीन्बाधित्वा परत्वाज्जरस् । निर्जरसा । निर्जरसे । निर्जरसः । पक्षे । हलादौ च रामवत् । वृत्तिकृता तु पूर्वविप्रतिषेधेनेनातोः कृतयोः

सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसादिति रूपे न तु निर्जरसा निर्जरस इति केचिदित्युक्तम् । तथा भिसि निर्जरसैरिति रूपान्तरमुक्तम् । तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्येत्येव रूपमिति स्वीकृतम् । एतच्च भाष्यविरुद्धम् । क्लीबे सोरमादेशे कृते सन्निपातपरिभाषया न जरस् । अजरम् । अजरसी । अजरे । परत्वाज्जरसि कृते झलन्तत्वान्नुम् । सान्तेति-दीर्घः । अजरांसि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् । ततः सन्निपातपरिभाषया न लुक् । अजरसम् । अजरम् । अजरसी । अजरे । अजरांसि । अजराणि ॥

## त्यदादीनामः । ७ । २ । १०२ ॥

एषामकारोऽन्तादेशः स्याद्विभक्तौ ॥ द्विपर्यन्तानामेवेष्टिः ॥ * ॥ स्यः । त्यौ । त्ये । सः । तौ । ते । यः । यौ । ये । एषः । एतौ । एते । अयम् । इमौ । इमे । असौ । अमू । अमी । द्वौ २ । द्वाभ्याम् । द्वयोः २ । द्विशब्दो नित्यं द्विवचनान्तः । द्विपर्यन्तानां किम् । भवान् । भवन्तौ । संज्ञायामुपसर्जनत्वे च नात्वं सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । द्विः । द्वौ । द्वयः । द्वावतिक्रान्तोऽतिद्विः हरिवत् । प्राधान्ये तु परमद्वावित्यादि ॥

## किमः कः । ७ । २ । १०३ ॥

किमः कः स्याद्विभक्तौ । अकच्सहितस्याप्ययमादेशः । कः । कौ । के । कम् । कौ । कान् इत्यादि सर्ववत् ॥

## कु तिहोः । ७ । २ । १०४ ॥

किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः ॥ कुतः । कुत्र । कुह ॥

**क्वाति । ७ । २ १०५ ॥**

किमः क्वेत्यादेशः स्यादति । क्व ॥

**तदोः सः सावनन्त्ययोः । ७ । २ । १०६ ॥**

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे । स्यः । सः । एषः । असौ । परमसः । द्विपर्यन्तानामित्येव । नेह । त्वम् । न च तकारोच्चारणसामर्थ्यान्नेति वाच्यम् । अतित्वमिति गौणे चरितार्थत्वात् । सञ्ज्ञायां गौणत्वे च न । त्यद् । अतित्यद् । अनन्त्ययोः किम् । हे स । त्यदादीनां सम्बोधनन्नास्तीति तूत्सर्गः ॥

**अदस औ सुलोपश्च । ७ । २ । १०७ ॥**

अदस औकारोन्तादेशः स्यात्सौ परे सुलोपश्च ॥ असौ । औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च ॥ * ॥ प्रतिषेधसन्नियोगशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ । असुकः ।

**इदमो मः । ७ । २ । १०८ ॥**

इदमो मस्य मः स्यात्सौ परे । त्यदाद्यत्वापवादः । अयम् । इयम् ।

**दश्च । ७ । २ । १०९ ॥**

इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । इमम् । इमौ । इमान् । इमे । इमाः । इमाम् । इमे । इमाः । इमे । इमानि ॥

**यः सौ । ७ । २ । ११० ॥**

इदमो दस्य यः स्यात्सौ परे । इयम् ॥

## इदोऽय् पुंसि । ७ । २ । १११ ॥

इदम इदः स्थाने अय् स्यात्सौ परे पुंसि ॥ अयम् ॥

## अनाप्यकः । ७ । २ । ११२ ॥

अक्ककारस्य इदम इदोऽन्स्यादापि विभक्तौ । आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः । अनेन । अनया । अनयोः । अकः किम् । इमकेन ॥

## हलि लोपः । ७ । २ । ११३ ॥

अक्ककारस्य इदम इदो लोपः स्यादापि हलादौ । नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे । सुपि चेति दीर्घः । आभ्याम् । एत्वं एभिः । अत्व कृते नित्यत्वाण्डेः स्मै । पश्चाद्धलिलोपः । अस्मै । अस्मात् इत्यादि । अकः । किम् । इमकाभ्याम् ॥

## मृजेर्वृद्धिः । ७ । २ । ११४ ॥

मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे । मार्ष्टा । मार्ष्टुम् । मार्जितुम् ।

## अचोऽञ्णिति । ७ । २ । ११५ ॥

ञिति णिति च प्रत्यये परेऽजन्ताङ्गस्य वृद्धिः स्यात् ॥ एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । कारकः । गौः । गावौ । गावः । सखायौ । सखायः ।

## अत उपधायाः । ७ । २ । ११६ ॥

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे।

पाकः । त्यागः । रागः । पाचकः । पाठकः । अतः किम् । भेदकः । उपधायाः किम् । चकासकः । तक्षकः ॥

**तद्धितेष्वचामादेः । ७ । २ । ११७ ॥**

ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् ॥

**किति च । ७ । २ । ११८ ॥**

किति तद्धिते च तथा । गार्ग्यः । वात्स्यः । दाक्षिः । औपगवः । कापटवः । नाडायनः । प्रावहतेष्ठक् । आक्षिकः । शालाकिकः । त्वाष्ट्रो जागत इत्यादावादिवृद्धिरन्त्योपधावृद्धिं बाधते इति सर्वत्रसिद्धिः ॥

इत्योरम्भट्टेन श्रीधोण्डभट्टविश्वरूपात्मजेन वैजनाथभट्ट-
विश्वरूपापरनामधेयेन विरचितायां व्याकरणदीपिका-
समाख्यायां पाणिनिसूत्रवृत्तौ सप्तमाध्यायस्य
द्वितीयः पादः समाप्तः ॥



# सप्तमाऽध्यायस्य तृतीयः पादः ।



**देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ।७।३।१॥**

परिभाषेयमिति पदमञ्जर्यां स्पष्टम् । एषां पञ्चानां वृद्धिप्राप्तावचामादेरच आत् ञ्णिति किति च । देविकायां भवं दाविकमुदकम् । देविकाकुले भवा दाविकाकूलाः शालयः । पूर्वदेविका नाम प्राचां ग्रामः । तत्र भवः पूर्वदाविकः । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः । साप्याकार एव भवति । अस्य स्वतन्त्रविधित्वे तु नेदं सिध्येत् । दाविकाकूला इति तु विधित्वेपि सिध्यति । अङ्गस्याचामादेरच आद्भवति स चेद्देविकादीनामाद्यच् भवतीत्यर्थसम्भवात् । अत एव सुदेविकायां भवः सौदेविक इत्यत्र नातिव्याप्तिः । विधित्वे सुशब्दोकारस्य देविकाद्यनवयवत्वात् परिभाषात्वे देविकादेर्वृद्धप्राप्तेश्च । परिभाषात्वे तु अङ्गस्येत्यस्यैवमभिसम्बन्धः क्रियते देविकादीनां वृद्धिप्राप्तावचामादेराकारो भवति देविकादीन्यङ्गसम्बन्धीनि चेत्स्युरिति । अनुवृत्तस्य सम्बन्धो वक्तव्य इत्येतावदेव चास्य प्रयोजनं । न तु किञ्चिद्व्यावर्त्यम् । यदि च परिभाषात्वेपि अङ्गस्याचामादेरचो वृद्धिप्राप्तौ आद्भवति स चेद्देविकादीनामाद्यजित्यर्थः स्यात्तदापि पूर्वदाविको नैव सिद्ध्येत् । शिंशपाया विकारः शांशपश्चमसः । पलाशादिभ्यो वेत्यञ् । शिंशपास्थले भवा देवाः शांशपास्थलाः । पूर्वशिंशपा नाम प्राचां ग्रामः । तत्र भवः पूर्वशांशपः । दित्यौह इदं दात्यौहम् । दीर्घ-

सूत्रे भवं द्वार्यसत्रम् । श्रेयसि भवं श्रायसम् ॥ वहीनरस्येत्वं वक्तव्यम् ॥ * ॥ वहीनरस्यापत्यं वैहीनरिः । आकारवृद्धिः प्राप्ता सा इकारेण बाध्यते । तस्य त्वैकारवृद्धिर्भवत्येव । न हि तस्यां नाप्राप्तायामिकारो विधीयते । यतः सापि बाध्येत । केचित्तु विहीनरस्यैव वैहीनरिमिच्छन्ति ॥

## केकयमित्रयुप्रलयानामादेरियः । ७ । ३ । २ ॥

एषां यकारादेरियादेशः स्यात् ञिति णिति किति च तद्धिते परे ॥ केकयस्यापत्यं कैकेयः । जनपदशब्दात्क्षत्रियादञ् । मैत्रेयिकया श्लाघते । मित्रयूनां भावेनेत्यर्थः । गोत्रचरणाच्छ्लाघात्याकारेति वुञ् । तत्र हि लौकिकं गोत्रं गृह्यते । लोके च ऋषिशब्दो गोत्रमित्यभिधीयते इति काशिका । प्रलयादागतं प्रालेयम् । इयादेशेन वृद्धिर्न बाध्यते । विषयभेदात् । अचामादेर्वृद्धिर्यादेरियादेशः । अङ्गं तूभयोर्विशेषणं न कार्यमिति हरदत्तः ॥

## न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् । ७ । ३ । ३ ॥

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किन्तु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः ॥ वैयाकरणः । स्वश्वस्यापत्यं सौवश्वः । स्वश्वशब्दः शिवादिरिति पदमञ्जर्यां स्पष्टम् । य्वाभ्यां किम् । वर्थस्यापत्यं वार्थिः । पदान्ताभ्यां किम् । यतीति यत् तस्य छात्रा याताः । प्रतिषेधवचनमैचोर्विध्यर्थम् इह मा भूत् । दाध्यश्विः । माध्वश्विः । अन्यथैज्भ्यां वृद्धिबाधे सिद्धे तद्वैयर्थ्यात् । एतच्च सूत्रं नाप्राप्तद्धितेष्वचामादेरित्येतद्विषयकम् । द्वे अशीती भृतो द्व्याशीतिक इत्यादौ संख्यायाः संवत्सरसंख्यस्य चेत्येतद्विषये न प्रवर्तते । कथं

तर्हि पूर्वेष्वलिन्दे भवः पूर्वैषयलिन्द इत्यादौ प्राचां ग्रामनगराणामित्येतद्विषये प्रवृत्तमिति चेत्। इष्टानुरोधेन प्राचांग्रामेत्यत्रैतदनुवर्त्य वाक्यभेदेन व्याख्यायते संख्यायाः संवत्सरेत्यत्र तु नेत्यवेहि। पूर्वशब्द आवर्तते तत्रैकोऽवयववचनः। अपरो व्यवस्थावचनः। ताभ्यां पूर्वावैचौ भवतस्तौ चाङ्गस्यावयवाविति। तेन उश्चाजश्च वजौ तयोरिदं औवजन्तस्येदमौवजीयमिति छः सिद्धः। अन्यथैचोरभक्तत्वादतन्मध्यपतितत्वाच्च प्रातिपदिकस्यावृद्धत्वान्न स्यादिति पदमञ्जर्यां स्पष्टम्॥

## द्वारादीनां च।७।३।४॥

द्वार। स्वर। स्वाध्याय। व्यल्कश। स्वस्ति। स्वर्। स्फ्यकृत। स्वादुमृदु। श्वस्। श्वन्। स्व। स्वग्राम। एषां न वृद्धिः ऐजागमश्च। द्वारे नियुक्तो दौवारिकः। द्वारपालस्येदं दौवारपालम्। दाविकाकूलवदसिद्धिः। सौवर्यः सप्तम्यः। व्यल्कशे भवः वैयल्कशः। स्वस्तीत्याह सौवस्तिकः। स्वर्भवः सौवः। अव्ययानां भमात्रे टिलोपः। स्वर्गगमनमाह सौवर्गगमनिकः। स्फ्यकृतस्यापत्यं स्फैयकृतः। ऋषित्वादणिति पदमञ्जर्यां स्पष्टम्। स्वादुमृदुन इदं सौवादुमृदवम्। श्वो भवं सौवस्तिकम्। श्वसस्तुट् चेति ठञ्। शुनो विकारो मांसं शौवम्। श्वादंष्ट्रायां भवः शौवादंष्ट्रो मणिः। संज्ञापूर्वको विधिरनित्य इति वृद्धाच्छो न। प्रत्ययसंज्ञाविशिष्टस्यैव छस्य विधानात्। स्वस्येदं सौवम्। स्वग्रामे भवः सौवग्रामिकः। अध्यात्मादित्वाट्ठञ्। स्वाध्यायशब्दो यदि शोभनोऽध्यायः स्वाध्यायः आङ् मध्ये प्रक्षिप्तः अन्येषामपि दृश्यते

इति वा उत्तरपदादेर्दीर्घत्वं तदा पूर्वेणैव सिद्धम् । यदि च स्वश्चासावध्यायश्च स्वाध्याय इति तदापि श्वादंष्ट्रवत्स्वशब्दादित्वेन स्वाध्यायस्वग्रामयोः सिद्धमेवेति दिक् ॥

## न्यग्रोधस्य च केवलस्य । ८ । ३ । ५ ॥

अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् । प्लक्षादिभ्योऽण् । केवलस्य किम् । न्यग्रोधमूले भवाः न्यग्रोधमूलाः शालयः । न्यग्रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम् । अव्युत्पत्तिपक्षे तु विध्यर्थम् ॥

## न कर्मव्यतिहारे । ८ । ३ । ६ ॥

अत्र ऐच् न स्यात् । व्यावक्रोशी । व्यावहासी ॥

## स्वागतादीनां च । ७ । ३ । ७ ॥

ऐच् न स्यात् । स्वागतमित्याह स्वागतिकः । स्वाध्वरे चरति स्वाध्वरिकः । स्वङ्गस्यापत्यं स्वाङ्गिः । व्याङ्गिः । व्यडस्यापत्यं व्याडिः । व्यवहारेण चरति व्यावहारिकः । स्वपतौ साधु स्वापतेयम् ॥

## श्वादेरिञि । ७ । ३ । ८ ।

ऐच् न । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । एतत्प्रकरणनिर्दिष्टैरादेरचो विशेषणात्तदादिविधिर्भवतीत्यत्रैतदेव ज्ञापकम् ॥ इकारादाविति वाच्यम् ॥ * ॥ श्वगणेन चरति श्वागणिकः । श्वायूथिकः ॥ इञन्तस्य चान्यत्र तद्धिते प्रतिषेधो वक्तव्यः ॥ * ॥ श्वाभस्त्रेरिदं श्वाभस्त्रम् । इञश्चेत्यण् ॥

## पदान्तस्यान्यतरस्याम् । ७ । ३ । ९ ॥

श्वादेरङ्गस्य पदशब्दान्तस्यैज्वा । श्वापदस्येदं श्वापदम् । शौवापदम् । शौवदंष्ट्रवच्छाभावे अण् ॥

## उत्तरपदस्य । ७ । ३ । १० ॥

अधिकारोऽयं हनस्त इत्यस्मात्प्राक् । वक्ष्यति जे प्रोष्ठपदानाम् । प्रोष्ठपदासु जातः प्रोष्ठपादो ब्राह्मणः ॥

## अवयवादृतोः । ७ । ३ । ११ ॥

अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिर्ञिणिति किति च तद्धिते ॥ पूर्ववार्षिकः । पूर्वशारदः । अपरहैमनः । वर्षाणां पूर्वं इत्येकदेशिसमासः । तत्र भव इत्यर्थे वर्षाभ्यष्ठक् । ऋत्वण् । हेमन्ताच्च सर्वत्रारात्र तलोपश्चेत्यण् । अवयवात्किम् । पूर्वासु वर्षासु भवः पौर्ववार्षिकः । पौर्वशरदिकः । कालाट्ठञ् । ऋतोर्वृद्धिमद्विधाववयवानामिति तदन्तविधिरुदाहरणे । प्रत्युदाहरणे तु न । अवयवत्वाभावात् । ऋतुवाचकाद्वृद्धिनिमित्तप्रत्ययविधौ तदन्तविधिर्वक्तव्योऽवयववाचकानां पूर्वपदत्वे इति तदर्थः । वृद्धिमद्विधौ किम् । पूर्वप्रावृषम् । ऋत्वण् । न तु प्रावृष एण्यः ॥

## सुसर्वार्द्धाज्जनपदस्य । ७ । ३ । १२ ॥

उत्तरपदस्य वृद्धिः । पाञ्चालकः । सर्वपाञ्चालकः । अर्द्धपाञ्चालकः । जनपदतदवध्योश्च । अवृद्धादपि बहुवचनविषयादिति वुञ् । सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिः । जनपदवाचिनः शब्दस्यानन्तरं प्रत्यये विधीयमाने तदन्तविधिर्यदि सुप्रभृतिभ्यः परः स भवतीति तदर्थः ॥

## दिशोऽमद्राणाम् । ७ । ३ । १३ ॥

दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्वपाञ्चालकः । उत्तरपा-

ञ्चालकः । दिशः किम् । पूर्वपञ्चालानामयं पौर्वपञ्चालः । दिक्शब्दग्रहणेन दिग्वाचकस्यैव ग्रहणात्तदन्तविधेरभावान्न वुञ् । अमद्राणां किम् । पौर्वमद्रः । मद्रेभ्योऽञ् । योगविभाग उत्तरार्थः । सुसर्वार्द्धदिशो जनपदस्यामद्राणामित्युक्ते स्वादिभ्यः परस्यापि मद्रस्य पर्युदासो मा भूदितीहार्थोऽपि ॥

## प्राचां ग्रामनगराणाम् । ७ । ३ । १४ ॥

यद्यपि नगरस्यापि ग्रामनामधेयत्वमस्ति तथापि नगराणामित्युत्तरपदविशेषणं ग्रामाणामित्यङ्गविशेषणमित्यर्थमुभयम् । प्राचां देशे दिशः परेषां नगरवाचिनां ग्रामवाच्यङ्गानामवयवस्यादाचो वृद्धिः । पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः । समुदायग्रामनामधेयादण् । पूर्वपाटलिपुत्रकः । उत्तरपदमेव नगरमाह । रोपधेतोः प्राचामिति वुञ् । यद्यप्येकमेव पाटलिपुत्रम् । तथापि तदेकदेशे तत्प्रवृत्त्या समानाधिकरणसमासः । भाष्ये तु नगरग्रहणं प्रत्याख्यातम् । पदैकदेशन्यायेनोत्तरपदस्यापि ग्रामत्वमित्याशयात् ।

## संख्यायाः संवत्सरसंख्यस्य च । ७ । ३ । १५ ॥

संख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ । द्विसांवत्सरिकः । द्वे षष्टी भृतो द्विषाष्टिकः । संख्यायाः परिमाणस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिकः द्वैरात्रिक इत्युत्तरपदवृद्धिर्न ॥

## वर्षस्याभविष्यति । ७ । ३ । १६ ॥

उत्तरपदवृद्धिः स्यात् । द्विवार्षिकः । भविष्यति तु द्वैव-

षेकः । अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न । कर्म करिष्यतीत्यादि पदान्तरसमभिव्याहारेण हि गम्यते तत्र भविष्यत्ता न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः । वर्षाल्लुक् च चित्तवति नित्यमिति नित्यं लुक् तु न भवति । आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे पुनर्नित्यग्रहणाद् भूतार्थ एव स इष्यते । अन्यत्र चित्तवत्यपि विकल्प एव ॥

**परिमाणान्तस्यासंज्ञाशाणयोः । ७ । ३ । १७ ॥**

उत्तरपदवृद्धिः स्यात् ञिदादौ । परमनैष्किकम् । असमासे निष्कादिभ्य इत्यत्र समासपर्युदासादत्र ठञ् । द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । द्विनैष्किकम् । शाणप्रतिषेधात्परिच्छित्तिसाधनमिह परिमाणम् । तेनोन्मानस्यापि भवति । असंज्ञेति किम् । पञ्च लोहिन्यः पञ्च कलापाः परिमाणमस्य पाञ्चलोहितकम् । पञ्चकलापिकम् । लोहिनी गुञ्जा । तद्धितान्तसंज्ञा । द्वैशाणम् । कुलिजशब्दमपि केचित्पठन्ति । द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः । कुलिजं धान्यमानम् । अन्तग्रहणं चिन्त्यप्रयोजनम् ॥

**जे प्रोष्ठपदानाम् । ७ । ३ । १८ ॥**

प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः जातार्थे ञिति णिति किति च ॥ प्रोष्ठपदासु जातः प्रोष्ठपादो माणवकः । प्रोष्ठपदाभिर्युक्तः काल इत्यणो लुबविशेषे इति लुपि कृतसन्धिवेलादिसूत्रेण जातार्थेऽण् । जे इति किम् । प्रोष्ठपदासु भवः प्रौष्ठपदः । बहुवचननिर्देशात्पर्यायोऽपि गृह्यते । भद्रपादः ॥

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च । ७ । ३ । १९ ॥

हृदाद्यन्ते पूर्वपदोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च ॥ सुहृदोऽपत्यं सौहार्दः । सौभाग्यम् । सुभगाया अपत्यं सौभागिनेयः । कल्याण्यादीनामिनङ् । महते सौभगायेत्यत्रोद्गात्रादयञन्ते तु छान्दसत्वान्नोत्तरपदवृद्धिः । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः । तेषु भवः साक्तुसैन्धवः । सिन्धुः कच्छादिः । तेन तदन्तविधिरिष्यते इत्यणिति वृत्तिः ॥

## अनुशतिकादीनां च । ७ । ३ । २० ॥

एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च । अनुशतिकस्येदं आनुशातिकम् । अनुहोडेन चरति आनुहौडिकः । अङ्गारवेणुर्नाम कश्चित्तस्यापत्यं आङ्गारवैणवः । सुवनडस्यापत्यं सौवनानाडिः । आकृतिगणोऽयम् । अभिगममर्हति आभिगामिकः ॥

## देवताद्वन्द्वे च । ७ । ३ । २१ ॥

अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात् ञिति णिति किति च परे ॥ आग्निमारुतम् । आग्निवारुणम् । यो देवताद्वन्द्वः सूक्तसम्बन्धी वा हविःसम्बन्धी तत्रायं विधिः । इह तु न भवति । स्कन्दविशाखौ देवते अस्य स्कान्दविशाखः । ब्रह्मप्रजापती ब्राह्मप्रजापत्यमिति वृत्तिः । अत्र सास्यदेवतेत्यण् । पत्युत्तरपदाण्ण्यः । ननु सास्यदेवतेत्यत्र न जातिवचनो देवताशब्दः । किन्तर्हि यस्मै हविर्निरूप्यते । यद्वा मन्त्रस्तुत्यम् । सा देवता गृह्यते । न चैवम्भूतोऽत्र द्वन्द्वार्थः एवं भूतत्वे वा यथा तद्धिता भवन्ति । तथायमपि विधिः प्राप्नोति । अत्राहुः । तद्धितः

क्वचिदन्यथापि भवति । द्या देवता ऽस्य द्यः स्थालीपाक इति हि प्रकृत्यैकाजिति भाष्ये दृष्टमिति पदमञ्जर्यां स्पष्टम् ॥

**नेन्द्रस्य परस्य ॥ ७ । ३ । २२ ॥**

सौमेन्द्रम् । परस्य किम् । ऐन्द्राग्नः ।

**दीर्घाच्च वरुणस्य । ७ । ३ । २३ ॥**

दीर्घात् परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणौ । दीर्घात्किम् । आग्निवारुणीमनड्वाहीम् ॥

**प्राचान्नगरान्ते । ७ । ३ । २४ ॥**

प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्ञिणिति किति च । सुह्मनगरे भवः सौह्मनागरः । पौण्ड्रनागरः । प्राचां किम् । मनगरमुदक्षु तत्र भवो मानगरः ।

**जङ्गलधेनुवलजान्तस्य विभाषित-मुत्तरम् । ७ । ३ । २५ ॥**

जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिरुत्तरपदस्य वा ञ्णिति किति च ॥ कुरुजङ्गले भवं कौरुजङ्गलम् । कौरुजाङ्गलम् । वैश्वधेनवम् । वैश्वधैनवम् । सौवर्णवलजम् । सौवर्णवालजम् ।

**अर्द्धात्परिमाणस्य पूर्वस्य तु वा । ७ । ३ । २६ ॥**

अर्द्धात्परिमाणवाचकस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा ञ्णिति किति च । अर्द्धद्रोणेन क्रीतमर्द्धद्रौणिकम् । आर्द्धद्रौणिकम् । प्राग्वतेष्ठञ् । अर्द्धात्परिमाणस्य पूर्वन्त्विति सुवचम् । विभाषितमित्यनुवृत्तेः ।

## नातः परस्य । ७ । ३ । २७ ॥

अर्द्धात्परस्य परिमाणाकारस्य वृद्धिर्न पूर्वस्य तु वा ञिदादौ । अर्द्धप्रस्थिकम् । आर्द्धप्रस्थिकम् । अतः किम् । अर्धकौडविकम् । तपरः किम् । अर्द्धखार्यां भवा अर्द्धखारी अर्द्धखारीभार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावनिषेधो न स्यात् । परस्य किम् । पूर्वस्य मा भूत् । नन्वत इत्येतत्सामर्थ्यादेव पूर्वस्य न भविष्यति । न हि पूर्वस्यार्द्धशब्दस्याकारादन्यो वृद्धिभागस्ति । किन्तु यदि पूर्वस्य प्रतिषेधः स्यात्पूर्वस्य तु वेत्येतदनर्थकं स्यात् । एवं तर्ह्यकारान्तस्योत्तरपदस्येत्येवं तदन्तविधिर्मा भूत् । किन्तु स्यात् इह प्रतिषेधः स्यात् । अर्द्धद्रौणिकमर्द्धकौडविकमिति । पूर्वस्तु विधिरर्धमुष्टिना क्रीतः अर्द्धमौष्टिक इत्यादौ चरितार्थः ॥

## प्रवाहणस्य ढे । ७ । ३ । २८ ॥

प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा ढे परे । प्रवाहणस्यापत्यं प्रावाहणेयः । प्रवाहणेयः । प्रवाहयतीति प्रवाहणः । शुभ्रादिः । ण्यन्तात्युट्ल्युल्ल्युटोर्ल्युः । णेर्विभाषेति णत्वम् ।

## तत्प्रत्ययस्य च । ७ । ३ । २९ ॥

ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रवाहणेयिः । प्रावाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः ॥

## नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् । ७ । ३ । ३० ॥

नञः परेषां शुच्यादिपञ्चानामादेरचो वृद्धिः पूर्वपदस्य तु वा ञिदादौ । अशुचेरागतमशुचौ भवं वा अशौचम् । आशौचम् ।

वौन्मुचोऽनाप्येऽचः ॥ ४ । १ । ५९ ॥

मुचेर्धातोः सकारादौ सनि परे अचः ओकारादेशो वा भवति । न चास्य द्विः । अनाप्ये न चेदस्याप्यं कर्म विवक्षते । मोक्ष्यते वत्सः स्वयमेव । वा ग्रहणात् "मुमुक्षते वत्सः स्वयमेवेत्यपि । अनाप्य इति किं? मुमुक्षति वत्सं देवदत्तः ।

घुमीमारभलभशकपतपदामिस् ॥ ४ । १ । ६० ॥

घुसंज्ञानां म्यादीनां चाचस्सकारादौ सनि परे इसादेशो भवति । एषामेकाच्च न द्विः । मीति मिञ्मीञ्मीङां ग्रहणम् । घु—दाण् प्रदित्सति दानम् । देङ् दित्सते पुत्रम् । डुदाञ् डुधाञ् दित्सति । दित्सते । धित्सति । धित्सते वस्त्रम् । दो दित्सति दण्डं । धेट् धित्सति स्तनम् । मिञ् मित्सति शतम् । मीञ् प्रमित्सति शत्रुम् । मीङ् मित्सते । मा इति मेङ्माङोर्ग्रहणम् । निमित्सते । न मातेरादादिकत्वात् मिमासति । अन्ये त्रयाणामाहुः मीत्सति । रभ् आरिप्सते । लभ् आलिप्सते । शक् शिक्षते । पत् पित्सते । पद् प्रपित्सते । सीति किम्? पिपतिषति ।

राधेर्वधे ॥ ४ । १ । ६१ ॥

राधेर्वधे हिंसायामर्थे सकारादौ सनि परे अच इस् भवति न च द्विः । प्रतिरित्सति । अपरित्सति । अन्यत्र आरिरात्सति गुरुम् ।

लिटीडप्येत् ॥ ४ । १ । ६२ ॥

राधेर्धातोः वधेऽर्थे इटि इडादावपिति च लिटि परे अच एकारो भवति न च द्विः । रेधतुः । रेधुः । रेधिथ । अपरेधतुः । अपरेधुः । अपरेधिथ । लिटीति किम्? अपराराध्यते । इडपीति किम्? अपरराध । वधे इति किम्? आरराधतुः । आरराधिथ ।

### त्रप्फलिभजत्रझट्क्वज्हादिददिशसिकृतस्यातोऽन्तर्हलोः ॥ ४ । १ । ६३ ॥

त्रप् फलि भज तृ इत्येतेषां यो ऽकारः यश्च झट्क्वज्ह-कारवकारादि ददि शसि कृतवर्जितस्य द्वयोरसहाययोर्हलोऽन्तरमध्ये वर्तते तस्यापीडादौ च लिटि परे एकारादेशो भवति। न च द्विः।त्रेपे। त्रेपाते।त्रेपिरे। फेलतुः। फेलुः। फेलिथ। फलीति फलनिष्पत्तौ। ञिफला विशरण इत्युभयोर्ग्रहणम्। भेजतुः। भेजुः। भेजिथ। तेरतुः। तेरुः। तेरिथ। एवं येमतुः रेणतुः लेभे। लेभाते।लेभिरे। नेमतुः। नेमुः। नेमिथ। पेचतुः पेचुः। पेचिथः। झट्क्वह्वादिपर्युदासः किम्? झडादि जझटतुः। जझटिथ।बभणतुः। बभणुः। बभणिथ। क्वादि चकणिथ।अजादि इयजिथ। ह्रादि जहसिथ। वादि ववणिथ। ददि ददृदे। शसि विशशसतुः। कृत विशशरतुः। अत इति किम्? दिदेविथ। ररासे। अन्तर्हलोरिति किम्? आटतुः। आटुः। हलोरिति द्वित्वनिर्देशादिह न भवति—ततक्षतुः। तत्सरतुः।

### फणादिजृत्रसभ्रमवमां वा ॥ ४ । १ । ६४ ॥

फणादीनां सप्तानां जृ त्रस् भ्रम वम इत्येतेषां चातः इडादावपिति च लिटि परे एकारो वा भवति न च द्विः। फेणतुः। फेणुः फेणिथ। पफणतुः। पफणुः। पफणिथ। स्येमतुः। सस्यमतुः। स्वेनतुः सस्वनतुः। रेजतुः रराजतुः। भ्रेशे भ्रेशाते भ्रेशिरे। बभ्राशे बभ्राशाते बभ्राशिरे भ्लेशे बभ्लाशे। भ्रेजे बभ्राजे। जृ जेरतुः जजरतुः। जेरुः जजरुः। त्रस् त्रेसतुः। तत्रसतुः। भ्रम भ्रेमतुः बभ्रमतुः। वम् वेमतुः ववमतुः।

### अन्थग्रन्थोर्लुक् च ॥ ४ । १ । ६५ ॥

अन्थग्रन्थोरिडादावपिति च लिटि परे अत एकारो वा

भवति न च द्विः । नकारस्य चानयोर्लुक् च भवति । श्रेथतुः श्रेथुः । श्रेथिथ । शश्रन्थतुः शश्रन्थुः शश्रन्थिथ । ग्रेथतुः ग्रेथुः ग्रेथिथ । जग्रन्थतुः जग्रन्थुः जग्रन्थिथ । इडपीति किम् ? शश्रन्थ । जग्रन्थ ॥

दन्भः ॥ ४ । १ । ६६ ॥

दन्भेरपिति लिटि परे अच एकारो नित्यं भवति न च द्विः । नलुक् च । देभतुः देभुः ।

थे वा ॥ ४ । १ । ६७ ॥

थे परे दन्भेश्च एकारो वा भवति न च द्विः । नलुक् च । देभिथ ददम्भिथ ।

घोर्हि ॥ ४ । १ । ६८ ॥

घुसंज्ञकस्य धातोः हकारादौ प्रत्यये परे हि इत्येतस्मिन् लेडादेशे परे अच एकारो भवति न च द्विः । देहि धेहि । हीति किम् ? दत्तात् । धत्तात् ।

देर्लिटीगिः ॥ ४ । १ । ६९ ॥

देः देङ् रक्षण इत्येतस्याच लिटि परे इगि इत्यादेशो भवति न च द्विः । अवदिग्ये । अवदिग्याते । अवदिग्यिरे ।

पिबस्येङ्के ॥ ४ । १ । ७० ॥

पा पाने इत्यस्याचो ङे परतः ईप् इत्यादेशो भवति न च द्विः । अपीप्यत् अपीप्यताम् अपीप्यन् । शब्निर्देशः किम् ? अपापयत् । ङ इति किम् ? पाययति ।

हिघ्नोऽङे कुः पूर्वात् ॥ ४ । १ । ७१ ॥

ङवर्जिते प्रत्यये परे हि हनोर्धातोः द्विर्भावे पूर्वस्मात् परयोरादेः कुः कवर्गादेशो भवति । हि—प्रजिघाय प्रजि-

घीषति । प्रजेघीयते । प्रजेघेति । हन् जघनिथ । जघान । जिघांसति । जङ्घन्यते । जङ्घनीति । अङे इति किम्? प्राजीहयत् । ङपर्युदासात् णिव्यवधानेऽपि भवति प्रजिघाययिषति ।

जेर्लिट्सनि ॥ ४ । १ । ७२ ॥

जि इत्येतस्य लिटि परे सनि च परे द्विर्भावे पूर्वस्मात्परस्य कुर्भवति । जिगाय जिग्यतुः जिग्युः । विजिग्ये । जिगिषति विजिगिषते । लिट्सनीति किम्? जेजीयते । जिज्यतुः जिज्युरिति जिनातेर्जिरूपस्य लाक्षणिकत्वान्न भवति ।

चेर्वा ॥ ४ । १ । ७३ ॥

चिनोतेर्धातोः लिट्सनोः परतः द्विर्भावे पूर्वस्मात्परस्य कुर्वा भवति । चिकाय चिकीषति । चिचाय चिचीषति ।

संजेणिषण्षणि ॥ ४ । १ । ७४ ॥

सञ्जे सञ्ज संग इत्येतस्य णयन्तस्य षणि षत्वभूते सनि सति द्विर्भावे पूर्वात्परस्य षिर्वा भवति । सिसञ्जयिषति षिषञ्जयिषति ।

न स्विदस्वदिसह्यणिस्तोः ॥ ४ । १ । ७५ ॥

स्विदि स्वदि सहि इत्येतेषां णयन्तस्तौतिवर्जितानां षणि सति द्विर्भावे पूर्वात्परस्य षिर्न भवति । सिस्वेदयिषति सिस्वादयिषति । सिसाहयिषति । सुसूषति । सिसिक्षति । अणिस्तोरिति किम्? सिषेचयिषति तुष्टूषति । षणीति किम्? सिषेच । षत्वं किम्? सिषासति सुसुप्सति । नकारः किम्? व्यतिसुषुपिषे । पूर्वादिति किम्? प्रतीषिषति । षणा पूर्वविशेषणं किम्? सुसोषुपिषते ।

पूर्वस्यास्वेऽचीयुव्योः ॥ ४ । १ । ७६ ॥

द्विर्भावे पूर्वस्य यो इवर्णोवर्णयोरस्वेऽचि परे यथा-

संख्यं इयुवौ भवतः । इयर्ति इयृतः इयृति इयेष । उवोष अरियर्ति अरियरीति अर्यर्ति अर्यरीति । इत्येतेषां पूर्वस्य इति योरित्वस्य समानाधिकरणविशेषणम् । अस्व इति किम्? ईषतुः । ऊषतुः ।

आणजश्ञ्झषः ॥ ४ । १ । ७७ ॥

द्विर्भावे पूर्वो य अवर्णोऽच् यश्च झष् तेषां यथासंख्यमश्च अण् च जश् च भवति ॥ चकार, जहार, पपौ, निन्ये, लुलूषति, सिस्रोकिषते, तुत्रोकिषते, ॥ जश्—जिझकारीयिषति, बभार, डुढौकिषते, दधौ, ॥

द्युतेरिः ॥ ४ । १ । ७८ ॥

द्युतेर्द्विर्भावे यः पूर्वस्तस्य इकारो भवति ॥ व्यदिद्युतत, विदिद्युते, विदिद्युतिषते, विदिद्योतिषते, विदेद्युत्यते ॥

खरश्चर् ॥ ४ । १ । ७९ ॥

द्विर्भावे पूर्वस्य खरश्चर् भवति ॥ पफाण, पफणतुः, पफणुः, चिच्छेद, चिच्छिदतुः, टिठकारीयिषति, तिष्ठासति, ॥

ष्ठिवेष्टो वा ॥ ४ । १ । ८० ॥

ष्ठिवेर्धातोर्द्विर्भावे पूर्वस्य खरः टकारो वा भवति ॥ तिष्ठेव, टिष्ठेव, तेष्ठीव्यते, टेष्ठीव्यते ॥

लुक्खयि ॥ ४ । १ । ८१ ॥

द्विर्भावे पूर्वस्य खरः खयि परे लुग्भवत्यनादि लुचोऽपवादः । चुश्च्योतिषति, तिष्ठासति, पिस्पन्दिषते ॥ खयीति किम्? सस्नौ ॥

हलोऽनादेः ॥ ४ । १ । ८२ ॥

द्विर्भावे पूर्वस्यानादेर्हलो लुग्भवति ॥ जग्लौ, मग्लौ, पपाच, पपाठ, आट, आटतुः, आटुः, पापच्यते, पापठ्यते, डुढै-

क्षिषते, तुत्रौकिषते, अटाट्यते, अटिटिषति, उचिच्छिषति ॥

अच्याक् ॥ ४ । १ । ८३ ॥

अचि प्रत्यये द्विर्भावे पूर्वस्याऽऽगमो भवति ॥ चराचरम् ॥

कुहोश्चुः ॥ ४ । १ । ८४ ॥

द्विर्भावे पूर्वस्य कुहोः कवर्गहकारयोः चुः चवर्गो भवति । कुः—चकार, चखान, जगाम, जघास, जिङ्कारीयिषति । ह ज-हौ जहास जिहीर्षति ॥

यङोकवतेः ॥ ४ । १ । ८५ ॥

यङन्तस्य द्विर्भावे पूर्वस्य कुहोः कवतिवर्जितस्य चुर्भवति ॥ चिक्रीयते ॥ जेह्रीयते ॥ अकवतेरिति किम्? उष्ट्रः कोकूयते । विकरणनिर्देशः कौतिकुवतिनिवृत्त्यर्थः । चेकूयते ॥ कवतिरव्यक्ते शब्दे कुवतिरार्तस्वरे कौतिः शब्दमात्रे । यङ्लुचि च न निषेधः चोकवीति ॥

ऐङमिदाहाकोः ॥ ४ । १ । ८६ ॥

यङन्तस्य द्विर्भावे पूर्वस्यामित अमिद्धाविनः आकारान्तहाक्वर्जितस्य चाकारः एङ्वादेशो भवति ॥ पापठ्यते । चेचीयते । बेभिद्यते । लेलूयते । बोभुज्यते । डोढौक्यते । तोत्रौक्यते ॥ पापच्यते पापचीति । बेभिदीति । लोलवीति ॥ अमिदाहाकोरिति किम्? यंयम्यते । रंरम्यते । जहाति । जहेति । अमिद् ग्रहणात् द्विर्भावे पूर्वविधौ बाधको न बाधकः तेन "अतोऽनुनासिकस्य मम्" इत्यनेन ऐङ् न बाध्यते । ऐङा "हलोऽनादेः" इति न बाध्यते ॥ अन्यथा बेभिद्यते इत्यादौ दकारादेरैङ् स्यात् । आकारविशेषणं किम्? जेह्रीयते ॥

वञ्चुस्रन्सध्वंसभ्रन्शकसपतपदिस्कन्दान्नीम् ॥ ४ । १ । ८७ ॥

वञ्चादीनां यङन्तानां द्विर्भावे पूर्वस्य नीमागमो भवति ॥

वनीवच्यते । वनीवञ्चीति । संनीस्रस्यते । सनीस्रंसीति । दनीध्वस्यते । दनीध्वंसीति । बनीभ्रश्यते । बनीभ्रंशीति । चनीकस्यते । चनीकसीति । पनीपत्यते । पनीपतीति । आपनीपद्यते आपनीपदीति । चनीस्कद्यते । चनीस्कन्दीति ॥

## अतोऽनुनासिकस्य मम् ॥ ४ । १ । ८८ ॥

अकारात्परो योऽनुनासिकस्तदन्तस्य धातोर्यङन्तस्य द्विर्भावे पूर्वस्य मम् भवति । यंयम्यते । यंयमीति । रंरम्यते । रंरमीति । जंगम्यते । जंगमीति । बंभण्यते । बंभणीति । तंतन्यते । तन्तनीति । चञ्चलः । तंतयः मममव्यते । लादीनामनुनासिकत्वे चाचलः तातयः । मामव्यते ।

## जब्जभदहदशभञ्जपसाम् ॥ ४ । १ । ८९ ॥

जपादीनां यङन्तानां द्विर्भावे पूर्वस्य मम् भवति । जंजप्यते । जंजभ्यते । दन्दह्यते । दंदश्यते । जञ्जपीति । जंजभीति । दन्दहीति । दन्दशीति । दशेति लुप्तनकारनिर्देशात् इलुच्यपि नकारो न श्रूयत इति सिद्धम् । बंभज्यते बम्भजीति । पंपस्यते । पम्पसीति । पसिः सौत्रो धातुः ।

## चर्फलाम् ॥ ४ । १ । ९० ॥

चर् गतिभक्षणयोः फल निष्पत्तौ जिफला विशरणे इत्येतेषां यङन्तानां द्विर्भावे पूर्वस्य मम् भवति । चञ्चूर्यते । चञ्चुरीति । पंफुल्यते । पंफुलीति । धान्यं पुष्यते । बहुवचनं सानुबन्धकार्थम् । अन्यथा हि निरनुबन्धग्रहणे सति न सानुबन्धस्येति फलनिष्पत्तावित्यस्यैव स्यात् ।

## तिचातोर्ल्युत् ४ । १ ९१ ॥

चर्फलां यङन्तानां रेफलकारपरस्याकारस्य ति च तकारादौ च प्रत्यये उकारादेशो भवति । चंचर्यते । चंचुरीति । पंफुल्यते । पंफुलीति । चरणं चूर्तिः । ब्रह्मचूर्तिः । प्रफुल्लितः ।

प्रफुल्तः । प्रफुल्तवान् । प्रफुल्तमनसः । अत इति किम्? फालयतेः क्विपि ततः "कर्तुः क्विप् ।" यङ् पंफाल्यते पंफाली-ति । एकदेशविकृतत्वात्प्राप्तिः ।

रीमृत्वताम् ॥ ४ । १ । ८२ ॥

ऋकारवतो धातोर्यङन्तस्य द्विर्भावे पूर्वस्य रीमागमो भवति ॥ वृतूङ् वरीवृत्यते । वरीवृतीति ॥ वृधूङ् वरीवृध्यते वरीवृधीति । नृतै नरीनृत्यते । नरीनृतीति ॥ दृशृ दरीदृश्यते । दरीदृशीति । दृज् दरीदृज्यते । दरीदृजीति ॥ परीपृच्छ्यते । परीपृच्छीति । वरीवृश्च्यते । वरीवृश्चीति ॥ ऋत्वतामिति किम्? चेक्रीयते । जेह्रीयते । अत्र लित्वे द्विर्वचनम् ॥ बहुवचनं लाक्षणिकार्थम् ॥

रम् रिम् च श्लुचि ॥ ४ । १ । ८३ ॥

ऋत्वतो धातोर्यङि श्लुचि सत्यां द्विर्भावे पूर्वस्य रम्-रिमौ रीम् चागमा भवन्ति ॥ कृ चर्कर्ति चरिकर्ति-चरीकर्ति ॥ बर्भर्ति-बरिभर्ति-बरीभर्ति ॥ नर्नर्ति-नरिनर्ति-नरीनर्ति ॥ वर्व-र्ति-वरिवर्ति-वरीवर्ति ॥ श्लुचीति किम्? नरीनृत्यते ॥ ऋत-स्तकारात् कॄ चाकर्ति-गॄ जागर्ति-तॄ तातर्ति ॥

निजामेत् ॥ ४ । १ । ८४ ॥

निजादीनां श्लुचि ह्वादेः श्लुपि द्विर्भावे पूर्वस्यैकारो भवति ॥ नेनेक्ति-नेनिक्तः-नेनिजति ॥ वेवेक्ति-विवेष्टि ॥ श्लु-चीति किम्? निनेज-निनिजति ॥ णिजृञ् विजृञ् विषृञ् इति त्रयो निजादयः ॥

पॄभृहाङ्माङामित् ॥ ४ । १ । ८५ ॥

पॄ ऋ भृ हाङ् माङ् इत्येतेषां श्लुचि श्लुपि विहिते

द्विर्भावे पूर्वस्य इकारो भवति ॥ पिपर्ति । इयर्ति । बिभर्ति । जिहीते मिमीते ॥ ह्राङिति ङकारात् ओहाको न भवति जहाति ॥ श्लुचीति किम्? पपा पर्पति-परिपर्ति-परीपर्ति ॥ यङन्तस्य द्विर्भावे श्लुचि न भवति ॥

सन्यतः ॥ ४ । १ । ८६ ॥

धातोः सनि परे द्विर्भावे पूर्वस्याकारस्य इकारो भवति ॥ पिपक्षति यियासति-प्रतीषिषति ॥ अत इति किम्? लुलूषति पापचिषते ॥

ओः पुयङ्ज्ये ॥ ४ । १ । ८७ ॥

सनि परे द्विर्भावे पूर्वस्य उवर्णस्य पुयञ्ञि पवर्गे यञि जकारे च ए अवर्णपरे इकारादेशो भवति ॥ पु । पूञ् पिपावयिषते । भू बिभावयिषते । मूङ् बन्धने मिमावयिषते ॥ यञ् । यु यियावयिषते । रु रिरावयिषते । लू लिलावयिषते । जः जुः सौत्रोधातुः । जिजावयिषति । असम्भवात् णिज्व्यवधाने भवति ॥ पुयञ्जीति किम्? दुदावयिषते । नुनावयिषते । इदमेवेत्ववचनमाज्ञापकं णिनिमित्तादपि प्राग्द्विर्वचनमिति । अन्यथा पूर्वेणैव सिद्धम् । एतच्च पुयाञ्ञवदवर्णपर एव । अन्यथा अचिकीर्तदिति न सिद्धेत् ॥

श्रुस्रुद्रुप्रुप्लुच्योर्वा ॥ ४ । १ । ८८ ॥

श्रुवादीनां सनि परे द्विर्भावे पूर्वस्योवर्णस्य यञि ए अवर्णपरे इकारो भवति वा ॥ शिश्रावयिषति । शुश्रावयिषति । सिस्रावयिषति । सुस्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषति ॥ ए इति किम्? सुस्रूषति ॥ ओरिति किम्? सोस्रविषते ॥ इत्यादि ॥

स्वपेर्णावुः ॥ ४ । १ । ९९ ॥

स्वपेधातोर्णौ परे द्विर्भावे पूर्वस्य यञि उकारो भवति ॥ सुष्वापयिषते । असुष्वापयिषत् ॥ यञीति किम् ? चोषोपयिषति ॥

सन्वल्लघौ ङेऽनग्लुचि ॥ ४ । १ । १०० ॥

न विद्यतेऽको लुग्यस्मिन् तस्मिन् णौ ङेपरे द्विर्भावे पूर्वस्य लघौ धात्वक्षरे-सनि द्विर्भावे पूर्वस्य यथा तथा कार्यं भवति ॥ "सन्यतः" इतीत्वम् ! अचीकरत् । अजीहरत् ॥ "ओः पुञ्ज्ये" । इति अपीपवत् । अबीभवत् । अमीमवत् । अयीयवत् । अरीरवत् अलीलवत् । अजीजवत् । "स्रवादि" विकल्पः अशिश्रवत् । अशुश्रवत् । असिस्रवत् । अदिद्रवत् । अदुद्रवत् । अपिप्रवत् । अपुप्रवत् । अपिप्लवत् । अपुप्लवत । अचिच्यवत् ॥ अचुच्यवत् लघाविति किम् ? अततक्षत् । अररक्षत् । अजजागरत् ॥ अचिक्षणत् । अचिक्रमत् । इत्यादौ हल्सङ्घात व्यवायेऽपि स्वादीनामत्ववचनाद्भवति ॥ णाविति किम् ? अचकमत् ॥ अनग्लुचीति किम् ? स्तनगदौ देवशब्दे कथादिः । अतस्तनत् । अजगदत् । दृशदमाख्यत्' अददृशत् ॥ वादमां प्रायुक्त अवीवददिति णिजातेर्निमित्तत्वेनाश्रयणात् ततोऽन्यस्याको लुचि प्रतिषेध इति भवति ॥

लघोर्दीर्घोऽनजादेः ॥ ४ । १ । १०१ ॥

ङे परे ऽनग्लुचि णावनजादेर्धातोर्द्विर्भावे पूर्वस्य लघोर्लघौ धात्वक्षरे परे दीर्घो भवति ॥ अचीकरत् । अजीहरत् । अबूबुधत् । अबूभुजत् । लघोरिति किम् ? अचिक्षणत् । अचिक्रमत् । अजिग्रहत् । अबिभ्रमत् ॥ अनजादेरिति किम् ? प्रोर्णुनवत् । औरिरत् ॥ लघाविति किम् ? अततक्षत् ॥

**स्मृदॄस्तॄत्वरम्रदप्रथस्पशोऽत् ॥ ४ । १ । १०२ ॥**

स्मरादीनां धातूनां ङे परेऽनग्लुचि णौ परतः द्विर्भावे पूर्वस्याकारादेशो भवति ॥ सन्वद्भावापवादः ॥ असस्मरत्-अददरत् ॥ अदिति तपरकरणात् अददरदित्यत्र "लघोर्दीर्घोऽनजादेः" इति दीर्घो न भवति ॥ अतस्तरत् । अतत्वरत् । अमम्रदत् । अपप्रथत् । अपस्पशत ॥

**वेष्टिचेष्टो वा ॥ ४ । १ । १०३ ॥**

वेष्टि चेष्टि इत्येतयोर्ङे परेऽनग्लुचि णौ द्विर्भावे पूर्वस्याकारादेशो भवति वा ॥ अववेष्टत्—अविवेष्टत्-॥ अचचेष्टत् अचिचेष्टत् ॥

**गणश्चेः ॥ ४ । १ । १०४ ॥**

गणयतेर्ङे परे द्विर्भावे पूर्वस्य ईकारो भवति वा ॥ अजीगणत् । अजगणत् ॥ चशब्दो वानुकर्षणार्थः ॥ चशब्दात् "भूरिदाक्षिण्यसंयुक्तं यत्वं सान्त्वमथोकयः" इत्येके ॥ अदन्तत्वाद्प्राप्तौ वचनम् ॥

**लिट्यादादेरतः ॥ ४ । १ । १०५ ॥**

लिटि धातोर्द्विर्भावे पूर्वस्यादेरकारस्याकारो भवति ॥ आटतुः । आटुः । आटिथ ॥ "एदे" इति लुचो बाधनार्थम् वचनम् ॥

**नक्चाश्नवृदाद्यनेकहलः ॥ ४ । १ । १०६ ॥**

अशौङ् व्याप्तावित्यस्य ऋकारादेवानेकहलश्च धातोर्लिटि द्विर्भावे पूर्वस्यादेरकारस्य आकारो भवति ॥ नक्चास्यागमः ॥ अश्नु-आनशे । आनशाते । आनशिरे ॥ श्नुविकरणोपादानात् अश भोजन इत्यस्य न भवति ॥ आशतुः । आशुः ॥ ऋदादि

ऋधू आनृधतुः आनृधुः । ऋजि आनृजे । आनृजाते । आनृजिरे ॥ अनेकहलः आनर्च । आनर्चतुः-आनर्चुः ॥ आनर्छ आनर्छतुः-आनर्छुः ॥ एवं-आनङ्क्ष । आनङ्क्ष । आनक्ष ॥ अनेकग्रहणं किम् ? आट-आटतुः-आटुः ॥

भूव्यथोदित् ॥ ४ । १ । १०७ ॥

भू व्यथ इत्येतयोर्लिटि द्विर्भावे पूर्वस्य यथासंख्यम् अत् इत् इत्येतावादेशौ भवतः॥ बभूव-बभूवे देवदत्तेन । अनुबभूवे कम्बलो देवदत्तेन ॥ विव्यथे । विव्यथाते । विव्यथिरे ॥ केचित् "भवति व्यथोदित्" इति निर्देशमिच्छन्ति । तत्र किं भवतीति कर्तृनिर्देशात्कर्तर्येव लिटि भुवोऽकारः न भावकर्मणोः बुभूवे देवेन । अनुबुभूवे कम्बलो देवदत्तेन ॥

इग्यजस्साचोर्य्याज्यम् ॥ ४ । १ । १०८ ॥

आज्यमित्याज्या इत्यतो ये निर्दिश्यते धातुस्तस्य लिटि द्विर्भावे पूर्वस्य साचः परेणाचा सहितस्यार्यरेफयकारपरस्य यजः स्थाने इगादेशो भवति । उवास-उवसिथ । उवाद उवदिथ । इयाज-इयजिथ । उवाप उवपिथ । उवाह-उवहिथ । उवाय-उवयिथ । संविव्याय-संविव्ययिथ । सुष्वाप-सुष्वपिथ । उवाच-उवचिथ । उवाश उवशिथ । विव्याच-विव्यचिथ । विव्याध-विव्यधिथ । जिज्यौ-जिज्यिथ । अर्योदिति किम् ? विव्याय-विव्याच विव्याध । वकारस्य मा भूत् । अर्यीति वचनात् "हलोऽनादेः" लुग्बाधया यज इग् ग्रहणम् ॥ रग्रहणमुत्तरार्थम् ॥ आज्यमिति किम् ? सस्याम-सस्यमतुः ॥

न वः ॥ ४ । १ । १०९ ॥

द्विर्भावे पूर्वस्य इति निवृत्तम् ॥ वः वेरिजादेशस्य वयो यो यज् लिटि परे तस्य इगादेशो न भवति ॥ "व्ये च" इति

वयो वप्राप्त्यर्थं वचनमुत्तरार्थं च ॥ ववाय ऊयतुः-ऊयुः ॥

वा । ४ । १ । ११० ॥

वेञादेशस्य वयो यो यञ् लिटि परे तस्य इगादेशो न भवति वा ॥ ऊयतुः ऊयुः । ऊवतुः–ऊवुः ॥

ण्ये च ॥ ४ । १ । १११ ॥

वेञ्धातोः ण्ये च लिटि च परे यञ इग् न भवति ॥ प्रवाय उपवाय ववौ । ववतुः । ववुः ॥

ज्यः ॥ ४ । १ । ११२ ॥

ज्या इत्येतस्य ण्ये च परे इग् न भवति । प्रज्याय । उपज्याय ॥

व्यः ॥ ४ । १ । ११३ ॥

व्येञः ण्ये च परे यञः इग् न भवति । प्रव्याय उपव्याय योगविभाग उत्तरार्थः ।

परेर्वा ॥ ४ । १ । ११४ ॥

परेः परस्य व्यः ण्ये च परे यञ इगादेशो वा भवति । परिव्याय । परीवीय ।

श्व्यादिष्वव्वचः क्ङिति ॥ ४ । १ । ११५ ॥

इग्यजः साचोर्यीति वर्तते । श्व्यादीनां व्वव्वचि इत्येतयोश्च क्ङिति प्रत्यये साचः अय्यर्परस्य यञ इगादेशो भवति । श्व्यादि–शूनः, शूनवान् । उषितः, उषितवान् । उदितः उदितवान् । इष्टः इष्टवान् । उप्तः उप्तवान् । ऊढः ऊढवान् । उतः उतवान् । संवीतः संवीतवान् । हूतः हूतवान् । स्वप् सुप्तः सुप्तवान् । वच्–वच परिभाषणे ब्रुवो वचि उक्तः उक्तवान् । क्ङितीति किम् ? श्वयिता यायज्यते । अय्यीति किम् ? संवीतः । वकारस्य मा भूत ।

**वशिव्यचिव्यधिज्याग्रहिव्रश्चिप्रच्छिभ्रज्जां-क्ङिति ॥ ४ । १ । ११६ ॥**

वश्यादीनां धातूनां क्ङिति ङिति च प्रत्यये परे साचः अर्थ्यपरस्य यञ इगादेशो भवति । वशि उष्टः उशन्ति, उशितः उशितवान् । व्यचि-विचति, वेविच्यते, विचितः, विचितवान् । व्यधि, विध्यति, वेविध्यते, विद्धः, विद्धवान् । ज्या जिनाति, जेजीयते, जीनः, जीनवान् । ग्रहि-गृह्णाति, जरीगृह्यते, गृहीतः गृहीतवान् । व्रश्चि, वृश्चति । वरीवृश्च्यते वृक्णः । वृक्णवान् । प्रच्छि पृच्छति, परीपृच्छ्यते, पृष्टः, पृष्टवान् । भ्रज्ज: भृज्जति, बरीभृज्जते, बरीभृज्यते भृष्टः भृष्टवान् । अर्यीति किम् ? विध्यति वृश्चति ।

**स्वापेर्ङे ॥ ४ । १ । ११७ ॥**

स्वापित्येतस्य णयन्तस्य ङे प्रत्यये परे साचो यञ इग् भवति । स्वपेर्णौ असूषुपत्, असूषुपताम् असूषुपन् । स्वाप इति घञन्तात्णौ असुषुपत् असुषुपताम्, असुषुपन् । ङ इति किम् ? स्वाप्यते, । सोषुप्यते ।

**वशो न यङि ॥ ४ । १ । ११८ ॥**

वशेर्धातोः यङि परे यञ इग्न भवति । वावश्यते ।

**स्वप्स्यमव्यः ॥ ४ । १ । ११९ ॥**

यङिति वर्तते । न नेति । स्वपस्यमव्य इत्येतेषां यङि प्रत्यये परे साचो यञ इग् भवति । सोषुप्यते, सम्वेवीयते, सेसिम्यते ।

**चायः की ॥ ४ । १ । १२० ॥**

चायृञ् इत्येतस्य धातोः यङि की इत्येवमादेशो भवति । चेकीयते । कीति दीर्घात् यङ्लुचि चेकितः ।

द्व्युक्तौ ह्वः ॥ ४ । १ । १२१ ॥

द्वे उक्ती अस्मिन्निति द्व्युक्तिस्तस्मिन् द्विर्वचननिमित्त् प्रत्यये विषयभूते ह्वः ह्वा इत्येतस्य धातोः साचो यञ इग् भवति । जुहाव जुहुवतु जुहुवुः जुहूषति । जोहूयते ।

णौ सन्ङे ॥ ४ । १ । १२२ ॥

सन्परे ङेपरे च णौ ह्व धातोः साचो यञ इग् भवति ॥ जुहावयिषति, अजूहवत् ॥ सन्ङ इति किम् ? ह्वाययति ॥ णावित्युत्तरार्थं वचनम् ॥

श्वेर्वा ॥ ४ । १ । १२३ ॥

श्विइत्येतस्य धातोः सन्परे ङपरे च णौ साचो यञ इग्वा भवति ॥ शुशावयिषति, शिश्वाययिषति, अशूशवत्, अशिश्वयत् ॥

लिड्यङि ॥ ४ । १ । १२४ ॥

श्वेर्धातोः लिटि यङि च परे साचो यञ इग्वा भवति ॥ शुशाव, शिश्वाय, शुशविथ, शिश्वयिथ, शुशुवतुः शिश्वियतुः शुशुवुः, शिश्वियुः, शोशूयते, शेश्वीयते ॥

न ॥ ४ । १ । १२५ ॥

श्वेर्धातोः लिड्यङोः परतः साचो यञ इग् न भवति ॥ शिश्वियतुः, शिश्वाय, शिश्वयिथ ॥ विकल्पः पिति सावकाश इत्यपिति परत्वात् किद्भावेन नित्यमेवेक्स्यात् पूर्वस्य च इति प्रतिषेधः ॥

प्यायः ॥ ४ । १ । १२६ ॥

प्याय इत्यस्य धातोर्लिड्यङोः परतः साचो यञ इग् भवति ॥ आपिप्ये, आपिप्याते, आपिप्यिरे । आपेपीयते ॥ आकारेण सह परस्य यस्येकि कृते पूर्वस्येक् ॥

क्तयोरनुपसर्गस्य ॥ ४ । १ । १२७ ॥

अनुपसर्गस्य प्यायः क्तयोः क्तक्तवत्वोः प्रत्यययोः परतः साचो यञ इग् भवति ॥ पीनं मुखम् । पीनवत् मुखम् । पीने अंसे । पीनवति अंसे । पीनोन्धुः । पीनवानन्धुः । पीनमूधः । पीनवदूधः ॥ अनुपसर्गस्येति किम् ? प्राप्यानमूधः ।

आङोन्धूधसोः ॥ ४ । १ । १२८ ॥

आङ एव परस्य प्यायः क्तयोरन्धूधसोरभिधेययोः साचो यञ इग् भवति ॥ आपीनोन्धुः, आपीनमूधः । आपीनवानन्धुः, आपीनवदूधः, ॥ आङ इति किम् ? प्राप्यानमूधः । अन्यत्र आप्यानश्चन्द्रमाः । अन्धुर्ग्रामम् ॥

स्फायः ॥ ४ । १ । १२९ ॥

स्फायैङित्यस्य धातोः क्तयोः साचः पूर्वेणाचा यञ इग् भवति ॥ स्फीतः, स्फीतवान् । संस्फीतः, संस्फीतवान् । क्तयोरिति किम् ? स्फातिः ॥

स्त्यः प्रपूर्वस्य ॥ ४ । १ । १३० ॥

प्रपूर्वः यः स्त्या इति धातुस्तस्य क्तयोः साचो यञ इग् भवति । प्रस्तीतः, प्रस्तीतवान्, प्रस्तीमः, प्रस्तीमवान् ॥ प्रपूर्वस्येति किम् ? संस्त्यानः, संस्त्यानवान् । प्रस्त्य इत्यनुक्त्वा पूप्रवग्रहणमधिकपूर्वनिवृत्यर्थं, संप्रस्त्यानः, संप्रस्त्यानवान् । अन्यत्राधिकपूर्वस्याप्यभिनिविशते । केषाञ्चित्प्रपूर्वस्य धातूपसर्गसमुदायस्य योऽवयवः स्त्या इति तस्य क्तयोर्यञ इग् भवति । प्रसंस्तीतः प्रसंस्तीतवान् ॥

द्रवमूर्तौ श्यः ॥ ४ । १ । १३१ ॥

द्रवस्य मूर्तिः काठिन्यं द्रवमूर्तिः । द्रवमूर्तौ वर्तमानस्य श्येङो धातोः क्तयोः साचो यञ इग् भवति ॥ शीनं शीनवत्

घृतम् । शीनं शीनवत् मेदः । शीना शीनवती वसा द्रवावस्थायाः काठिन्यं गतमित्यर्थः ॥ अन्यत्र संश्यानो वृश्चिकः शीतेन । शीतं वर्तते, शीतो वायुरिति "शीतोष्णात्रिप्रादिति निपातनात्सिद्धम् ॥"

प्रतेः ॥ ४ । १ । १३२ ॥

प्रतेः परस्य श्यैङः क्तयोः साचो यञ इग् भवति । प्रतिशीनः । प्रतिशीनवान् । अद्रवमूर्त्यर्थ आरम्भः ।

वाभ्यवपूर्वस्य ॥ ४ । १ । १३३ ॥

अभि अव इत्येवं पूर्वस्य श्यः क्तयोः परतः साचो यञ इग् भवति वा । अभिशीनः अभिशीनवान्, अभिश्यानः अभिश्यानवान् । अवशीनः अवशीनवान्, अवश्यानः अवश्यानवान् । द्रवमूर्तावपि परत्वादयमेव विकल्पः । अवशीनं घृतमवश्यानम् । अभ्यवपूर्वस्येति किम्? संश्यानः संश्यानवान् । पूर्वग्रहणं किम्? समभिश्यानः । समवश्यानः ॥ अभिसंशीनः अभिसंशीनवान्, अभिसंश्यानः अभिसंश्यानवान् । अवसंशीनः अवसंशीनवान् अवसंश्यानः अवसंश्यानवान् । इत्यपरे ॥

शृतं पक्वे हविःक्षीरे ॥ ४ । १ १३४ ॥

पक्वशब्देनैकिकृतोऽर्थः पक्वः, पचेः कर्म कर्ता कर्म च श्रा इत्येतस्य श्रपयतेश्च प्रथमण्यन्तस्य क्ते शृभावो निपात्यते योऽसौ पक्वार्थः स चेत् हविः क्षीरं वा भवति ॥ श्रा इति हि कर्मकर्तृविषयमाह -श्रपिः प्रथमण्यन्तः कर्तृविषयम् । शृतं हविः क्षीरं वा स्वयमेव । शृतं हविः शृतं क्षीरं देवदत्तेन ॥ पक्व इति किम्? श्रपितं हविः क्षीरं वा देवदत्तेन, जिनदत्तेन, पाचितमित्यर्थः । द्वितीयण्यन्तात् क्तः अन्यत्र श्राणा श्रपिता यवागूः ॥

दीर्घाऽचोऽवः ॥ ४ । १ । १३५ ॥

अजन्तस्य वेञ्वर्जितस्य धातोः साचो यञ इक् प्रत्यये

परे दीर्घो भवति॥ क्षीनः । संवीतः । हूनः । शूनः॥ अच इति किम्? क्षुप्तः । तप्तः ॥ अव इति किम्? उतः । ऊतवान् । निरुतं दुरुतम् ॥

क्विजलि क्ङित्यनुनासिके ॥ ४ । १ । १३६ ॥

क्वौ क्ङिति ङिति च जलादौ प्रत्यये परे योऽनुनासिकस्तस्मिन् परे योऽच् धातुस्तस्य दीर्घो भवति ॥ प्रशान्, प्रतान्, प्रदान्, प्रतामौ, प्रतामः, प्रदामौ, प्रदामः, प्रतान्भिः, प्रदान्भिः । प्रशानिति स्वरादिः ॥ जलिक्ङिति शान्तः, शान्तवान्, शान्त्वा, शान्तिः, तान्तः, दान्तः, ङिति—शंशान्तः, तन्तान्तः दन्दान्तः । क्ङितिङिति किम्? यन्ता, रन्ता ॥

सनि ॥ ४ । १ । १३७ ॥

अजन्तस्य धातोः जलादौ सनि परे दीर्घो भवति ॥ चिचीषति, तुष्टूषति, चिकीर्षति ॥ अज इति किम्? रिरंसते ॥

इङ्नः ॥ ४ । १ । १३८ ॥

एः इणिगिङादेशस्य गमेः हन्तेश्चाचो जलादौ सनि परे दीर्घो भवति ॥ संजिगांस्यते, अधिजिगांस्यते, माता । अधिजिगांसते, जिघांसति । इ इति गमिग्रहणात् गच्छतेर्न भवति । संजिगंसते वत्सो मात्रा ॥ जलीति किम्? जिगमिषति, अधिजिगमिषति ॥

तनो वा ॥ ४ । १ । १३९ ॥

तनूज् विस्तारे इत्यस्य धातोर्योऽच् तस्य जलादौ सनि परे दीर्घो वा भवति ॥ संतितांसति, संतितंसति ॥ जलीति किम्? संतितनिषति ॥ यङ्लुपः तंतनिषति ॥

क्रमस्त्वि ॥ ४ । १ । १४० ॥

क्रमेर्धातोरचः जलादै क्त्वाप्रत्यये परे दीर्घो वा भवति ॥ क्रान्त्वा, क्रन्त्वा । जलीति किम्? क्रमित्वा, प्रक्रम्य ॥

## श्वोऽनुनासिके च ॥ ४ । १ । १४१ ॥

धातोः छकारवकारयोरनुनासिकादौ क्विपि झलादौ च प्रत्यये यथासंख्यं श ऊच् इत्यादेशौ भवतः । प्रश्नः । विश्नः, शब्दप्राशौ, शब्दप्राशः, गोविट्, गोविशौ, गोविशः, प्रष्टा, प्रष्टुम्, प्रष्टव्यम्, पृष्टः, पृष्टवान्, पृष्ट्वा, । ऊच् अक्षद्यूः, हिरण्यष्ठ्यूः, स्यूनः, स्यूतवान्, स्यूत्वा. स्यूतिः, स्यूमः, स्यूनः, सुस्योमा । वनिक्वनिपोर्वकारस्यानुनासिकत्वे सुस्योवा, सुस्यूवा । धातोरिति किम्? द्युभ्याम्, द्युभिः । इह केषाञ्चिज्झलिङ्क्लीत्यनुवर्तते । तेषां दिवेर्यङ्श्लुचि देदेति, देदेषि । येषां नानुवर्तते तेषां देद्योति, देद्योषि ।

## त्वर्ज्वर्मव्यविस्रिवोऽचश्च ॥ ४ । १ । १४२ ॥

त्वर् ज्वर् मवि अवि स्रिव इत्येतेषामचो वकारस्य चानुनासिके क्वौ झलि च प्रत्यये ऊजादेशो भवति । त्वर् तूः, तुरौ, तुरः, तूर्तिः, तूर्णः, तूर्णवान्, तातूर्ति । ज्वरः—जूः, जुरौ जुरः, जूर्तिः, जाजूर्ति । मवि मूः मुवौ मुवः मूतिःमामोति । अवि ऊः उवौ उवः ऊतिः ओतुः । स्रिव् सुस्रोमा स्रूः । स्रुवौ स्रुवःस्रूतः स्रूतवान् स्रूत्वा स्रूतिः ।

## राल्लुक् ॥ ४ । १ । १४३ ॥

रात्परयोर्धातोः छकारवकारयोरनुनासिके क्वौ झलि च लुक्लोपो भवति । शूचोऽपवादः । हुर्च्छा—हूःहुरौ हुरः हूर्णः हूर्णवान् हूर्तिः । मूर्च्छा मूः मुरौ मुरःमूर्तिः । तुर्वैं-तूः तुरौ तुरः तूर्णः तूर्णवान् तूर्तिः । धुर्वैं—धूः धुरौ धुरः धूर्णः धूर्णवान् धूर्तिः ।

## गाङ्कुटां ङिद्वदञ्णि ॥ ४ । १ । १४४ ॥

गाङित्येतस्य कुटादीनां च धातूनां अञ्णिति प्रत्यये परे ङिद्वत् ङितीव कार्यं भवति । गाङः अध्यगीष्ट अध्यगीषाताम्, अध्यगीषत । कुटां—कुटिता, कुटितुम्, कुटितव्यम्,

कुटित्वा । घुटिता, घुटितुम् । घुटितव्यम्, घुटित्वा । गाङिति । ङकारात् कै गै शब्दे इत्यस्य गाता गातुमिति भवति । गाङ्गताविल्यस्य त्वनभिधानादग्रहणम् । तस्यापीत्येके । अञ्णीति किम् ? उत्कोटः । उत्कोटकः ।

## इटि विजः ॥ ४ । १ । १४५ ॥

विजेर्धातोरिडादौ प्रत्यये ङित्कार्यं भवति । उद्विजिता उद्विजितुम् । उद्विजितव्यम् । इटीति किम् ? उद्वेगः । उद्वेजनीयः ।

## वोर्णोः ॥ ४ । १ । १४६ ॥

ऊर्णोरिडादौ प्रत्यये ङित्कार्यं भवति वा ॥ प्रोर्णुविता । प्रोर्णुवितुम् । प्रोर्णुवितव्यम् । प्रोर्णविता प्रोर्णवितव्यम् ॥

## श्ल्यवॢलौ ॥ ४ । १ । १४७ ॥

श इति शकारावयवकः शित् । एवं प् इति पित् । लौति-लिङ्लिटोर्ग्रहणम् । धातोर्विहिते प्रत्यये शिति लादेशे चापि-लौपरे ङितीव पूर्वस्य कार्यं भवति । चिनुते । विध्यति । वृश्चति गृह्णाति । जागृहि । कुरुतः । हतः । कुर्वन्ति । घ्नन्ति । शिदिति किम् ? कर्ता कर्तुम् । अवॢलाविति किम् ? जागर्ति । हन्ति । करोति । करोषि करोमि । लौ लिङि चेषीष्ट वलिषीष्ट । लिटि—सस्रंसे दध्वंसे ङ्वादौ ङित्वाद्याथासंख्यम् ॥

## किद्वल्लिटीन्धेश्चासंयोगात् ॥ ४ । १ । १४८ ॥

इन्धेरन्यस्माच्च धातोरसंयोगादपिति लिटि किद्वत्किकतीव कार्यं भवति । समीधे । समीधाते । समीधिरे । निन्यतुः निन्युः । बिभिदतुः । बिभिदुः । चक्रतुः । चक्रुः । ववृते । ववृधे । ईषतुः ईषुः सुषुपतुः सुषुपुः । असंयोगादिति किम् ? सस्रंसे-दध्वंसे । अपिति किम् ? निनाय निनयिथ । बिभेद बिभेदिथ । इयाज इयजिथ । ङिद्वदिति प्रकृते: किद्वद्वचन यादीति यज

इगर्थं जागृतेरगर्थं च ङिति हि तन्न भवति । स्वपिता स्वपन्ति जागृतः । जाग्रति ।

स्वञ्जेर्वा ॥ ४ । १ । १४८ ॥

स्वञ्जेर्लिटि परे किद्वत्कार्यं वा भवति । परिषस्वजे । परिषस्वञ्जे ।

नशजस्ति त्वि न्युपान्त्ये ॥ ४ । १ । १५० ॥

नशः जान्तान्च धातोर्नकार उपान्त्ये सति तकारादौ क्त्वाप्रत्यये परे किद्वत्कार्यं वा भवति । नष्ट्वा नंष्ट्वा । रक्त्वा रंक्त्वा भक्त्वा भंक्त्वा । मक्त्वा मंक्त्वा । तीति किम् ? विभज्य प्रसज्य । परिष्वज्य । न्युपान्त्य इति किम् ? भुक्त्वा । इष्ट्वा । मृष्ट्वा ।

थफवञ्चिलुञ्च्यृतितृषिमृषिकृश इटि ॥ ४ । १ । १५१ ॥

न्युपान्त्ये सति थकारफकारान्तयोः वञ्च्यादीनां च इडादौ क्त्वाप्रत्यये किद्वत्कार्यं वा भवति । त्वीतिनिषेधे विकल्पः । श्रथित्वा श्रन्थित्वा । ग्रथित्वा ग्रन्थित्वा गुफित्वा गुम्फित्वा । वचित्वा वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ऋतित्वा अर्तित्वा । तृषित्वा तर्षित्वा । मृषित्वा मर्षित्वा । कृशित्वा कर्शित्वा न्युपान्त्य इति किम् ? कोथित्वा रेफित्वा । इटीति किम् ? वक्त्वा मृष्ट्वा । वञ्चिमृषिविकल्पते टौ ऊदित्वात् ।

यौ हलादेरलःसंस्त्वोः ॥ ४ । १ । १५२ ॥

यौ इकारे उकारे चोपान्त्ये सति रलन्तस्य हलादेर्धातोरिडादौ सनि क्त्वायां च प्रत्यये किद्वत्कार्यं वा भवति । लिलिखिषति लिलेखिषति । लिखित्वा । लेखित्वा दिद्युतिषते दिद्योतिषते । द्युतित्वा द्योतित्वा । याविति किम् ? विवर्तिषते वर्तित्वा । हलादेरिति किम् ? एषिषिषति । एषित्वा । रल इति किम्? दिदेविषति देवित्वा । इटीति किम् ? बुभुक्षते भुक्त्वा ।

उति शपः क्तयोर्भावारम्भे ॥ ४ । १ । १५३ ।

शपवान् शपथः श्लेले शपमुत्पादयति नस्य धातोरुति उपकारोपान्त्ये सति भावे आरम्भे आदिकर्मणि च इडाद्योः क्तयोः क्तक्तवत्वोः कित्कार्यं वा भवति । कुच शब्दे तारे कुचितमनेन कोचितमनेन । प्रकुचितः प्रकुचितवान् । प्रकोचितः प्रकोचितवान् । द्युति दीप्तौ, द्युतितमनेन द्योतितमनेन । प्रद्युतितः प्रद्योतितः । लुटितमनेन प्रलुटितः । लोटितमनेन । प्रलोटितः । रुदितमनेन रोदितमनेन । प्ररुदितः प्ररोदितः । प्ररोदितवान् प्ररुदितवान् । उतीति किम्? श्वितितमनेन प्रश्वितितः । शप इति किम्? गुधितमनेन प्रगुधितः । भावारम्भे इति किम्? रुचितः कार्षापणः इटीति किम्? रूढमनेन प्ररूढः, प्ररूढवान् ।

शीङ्डीङ्पूङ्स्विद्मिदिक्ष्विद्धृषो न ॥ ४ । १ । १५४ ॥

शीङादीनामिडाद्योः क्तयोः कित् कार्यं न भवति । शयितः, शयितवान् । डयितः डयितवान् । पवितः, पवितवान् । प्रस्वेदितः, प्रस्वेदितवान् । प्रमेदितः प्रमेदितवान् । प्रक्ष्वेदितः प्रक्ष्वेदितवान् । धर्षितः धर्षितवान् । शीङ्डीङ्पूङामनुबन्धोच्चारणं यङ्लुग्निवृत्त्यर्थम् । शेश्यितः शेश्यितवान् । डेड्यितः डेड्यितवान् । पोपुवितः । पोपुवितवान् । इटीत्येव पूतः पूतवान् । क्ष्विण्णः क्ष्विण्णवान् ।

मृषः क्षान्तौ ॥ ४ । १ । १५५ ॥

मृष इत्येतस्य क्षान्तौ वर्तमानस्य इटि क्तयोः कित्कार्यं न भवति । मर्षितः, मर्षितवान् । क्षान्ताविति किम्? अपमृषितं वाक्यमाह । उपश्लिष्टमित्यर्थः । इटीति किम्? मृष्टः मृष्टवान् ।

क्त्वि ॥ ४ । १ । १५६ ॥

इडादौ क्त्वाप्रत्यये कित्कार्यं न भवति । देवित्वा सेवित्वा वर्तित्वा वर्धित्वा स्रंसित्वा ध्वंसित्वा व्रश्चित्वा । इटीत्येव कृत्वा हत्वा इष्ट्वा शान्त्वा ।

स्कन्दस्यन्दः ॥ ४ । १ । १५७ ॥

स्कन्दस्यन्दोर्धातोः क्त्वाप्रत्यये कित्कार्यं न भवति । स्कन्त्वा । स्यन्त्वा । त्वीति तकारप्रश्लेषात्तकारादावेवायं प्रतिषेधस्तेन प्रस्कद्य प्रस्यद्य । इत्येके । अन्ये अवस्कन्द्य अवस्यन्द्य । इत्यप्युदाहरन्ति ।

मृडमृद्गुधकुषक्लिशवदूवसः ॥ ४ । १ । १५८ ॥

नेति निवृत्तम् । मृडादीनां क्त्वाप्रत्यये कित्कार्यं भवति । मृडित्वा, मृदित्वा, गुधित्वा, कुषित्वा, क्लिशित्वा, उदित्वा, उषित्वा "क्त्वीति" प्रतिषेधे "यौ हलादेरलः संस्त्वोः" इति विकल्पे च प्राप्ते वचनम् ।

रुद्विन्मुषिग्रहिस्वप्प्रच्छां सनि च ॥ ४ । १ । १५९ ॥

इटीति निवृत्तम् । रुधादीनां सनि चकारात् क्त्वाप्रत्यये च किद्वत्कार्यं भवति । रुदित्वा रुरुदिषति । विदित्वा विविदिषति । मुषित्वा मुमुषिषति । गृहीत्वा जिघृक्षति । रुद्विद्मुषीणां त्विविकल्पे, ग्रहेः प्रतिषेधे च प्राप्ते वचनम् । सुषुप्सति पिपृच्छिषति । स्वपिपृच्छेः सनर्थमेव क्त्वा हितयोः किदेव अनिष्टम्[1] ।

सीकः ॥ ४ । १ । १६० ॥

इगन्तस्य धातोः सकारादौ सनि परे कित्कार्यं भवति । चिचीषति । निनीषति । तुष्टूर्षति । चुकूषते । चिकीर्षति । जिहीर्षते । तितीर्षति । सीति किम् ? शिशयिषते ।

१ अनिट्त्वादित्यपि पुस्तकान्तरे पाठः

तु तेजसि न व्यभिचारः । तत्राप्यवयविनो ग्रहेऽवयवस्यावयवावयवस्यावयवान्तरस्य वा विषयसंस्कारक(१)तेजसो विद्यमानत्वात् । न च तैजसत्रसरेणुस्थले नैवं सम्भवतीति वाच्यम् । तस्य जालस्थसौरालोकसंस्कार्यत्वात् । न च संयोगेन बाह्यालोकस्य संस्कारकत्वं संयोगत्वस्यातन्त्रत्वात्(२) । तस्माच्चाक्षुषभावसाक्षात्कारमात्र एव बाह्यालोकापेक्षेत्याहुः । तन्न(३)

त्यर्थः । तत्रापि तदपेक्षायामनवस्थया नियमासिद्धिरिति भावः ॥ एकदेशिसमाधिन्दूषयितुमनुवदति ॥ अन्ये त्विति ॥ अवयविनोवयवान्तरस्य वा विषयसंस्कारकस्य विद्यमानत्वादिति योजना(४) ॥ ननु तेजस्त्रसरेणुग्रहेवयवानामतीन्द्रियतयाऽसंस्कारकत्वात्तत्र व्यभिचार इत्याशङ्क्याह ॥ न चेति ॥ न हि सर्वतो विततान्धकारे केवलतेजस्त्रसरेणुग्रहः संप्रतिपन्नः बहुलालोके तु तदवयवानामसंस्कारकत्वेपि न क्षतिरित्याह ॥ तस्येति ॥ संयोगत्वस्येति । सामान्ये बाधके सत्येव नियमस्य विशेषनिष्ठत्वकल्पनादिति भावः । बाह्यालोकस्य विषयसंस्कारकत्वे संयोगित्वमेव तन्त्रं इत्याशयेन दूषयति-

(१) अवयविनो ग्रहेऽवयवस्य अवयवस्य ग्रहेऽवयविनोऽवयवान्तरस्य वा विषयसंस्कारकस्येति पा० २ पु० ।

(२) संयोगस्यातन्त्रत्वादिति पा० २ पु० ।

(३) तन्नेत्यनन्तरं तथाहि इति पाठो विशेषः २ पु० ।

(४) अवयविनो ग्रहेऽवयवस्यावयवस्य ग्रहेऽवयविनोऽवयवान्तरस्य वा विषयसंस्कारकस्येति पा० २ पु० ।

अन्वयव्यतिरेकाभ्यां घटादिचाक्षुषसाक्षात्कारे बाह्यालोकसम्बन्धस्य कारणता गृह्यते । सा च न सम्बन्धिसम्बन्धत्वेन परम्परासम्बन्धेऽपि कार्योदयप्रसङ्गात् । नापि संयोगसमवायसाधारणसाक्षात्सम्बन्धत्वेन तस्यैवानिर्वचनात् तन्निर्वचनेऽपि वा तदपेक्षया संयोगत्वस्य लघुत्वात् । तथा च संयोगत्वमेव तन्त्रम् । न च तेजोग्रहेऽपि बाह्यालोकसंयोगापेक्षैव चक्षुषः । महालोकस्यावयवावयवसंयोगसम्भवेऽपि तेजश्चतुरणुके तदवयवावयवसंयोगस्यायोग्यत्वेन तथाभूतसंयोगाभा-

---

तन्त्रेति ॥ अन्वयेति ॥ सत्यपि चक्षुःसन्निकर्षेऽन्धकारस्थघटादेः साक्षात्कारानुपपत्तेस्तत्रैव दीपादिसमवधाने सत्युत्पत्तेरित्येवंरूपाभ्यामित्यर्थः ॥ संयोगतन्त्रतां व्यवस्थापयिष्यन्परिशिनष्टि सा चेति ॥ परम्परेति । अन्धकारवद्गृहान्तर्वर्तिभित्तिभागसन्निकृष्टस्य घटादेर्बहिर्भित्तिभागसन्निकृष्टदीपादपि साक्षात्कारापत्तेरित्यर्थः ॥ तस्यैवेति ॥ उभयानुगतस्य साक्षात्सम्बन्धत्वस्येत्यर्थः । ननु संयोगसमवायान्यतरत्वेन तन्निर्वचनं सुशकमेवेत्यत आह ॥ तन्निर्वचनेपीति ॥ लघुत्वादिति ॥ संयोगत्वस्य जातित्वेनाखण्डत्वादित्यर्थः ॥ ननु संयोगतन्त्रतायामपि न तेजसि व्यभिचारः तदवयवावयवपरम्परासंयोगसम्भवादित्याशङ्क्याह ॥ न च तेजोग्रह इति ॥ तथाभूतेति ॥ योग्यप्रतियोगिकेत्यर्थः । अन्वयव्यतिरेकाभ्यां तस्यैव तत्र हेतुत्वावधारणादिति

वात् । न च तेजश्चाक्षुषसाक्षात्कारस्य तथाभूतालोकसम्बन्धस्य व्यभिचारात्(१) न क्वचिदपि व्यतिरेकसिद्धिरित्याद्यूह्यम् । प्रमाणबलात्तेजोव्य-

भावः ॥ ननु चतुरणुकेपि जालस्थसौरालोकसंस्कार्यत्वमुक्तप्रायमित्याशङ्क्याह ॥ न चेति ॥ व्यभिचारोत्र व्यतिरेकः ॥ अयमाशयः । तेजश्चाक्षुषसाक्षात्कारालोकसंयोगयोः कार्यकारणभावसिद्धौ तथा कल्पना स्यात्तत्सिद्धिश्च नियतान्वयव्यतिरेकाभ्यां । तदेतरसकलकारणसमवधाने आलोकसमवधाने घटचाक्षुषसाक्षात्कारोत्पत्तिस्तदसमवधाने नेतिवत् इतरकारणसमवधानेप्यालोकसमवधानापराधेन तेजश्चाक्षुषसाक्षात्कारस्य क्वचिद्व्यतिरेकसिद्धिरस्ति येन स तयोः कल्प्येत । सति विषयभूते तेजसि तदवयवसौरादितेजसामावश्यकत्वात् असति तस्मिंस्तद्व्यतिरेकादेव साक्षात्कारव्यतिरेकोपपत्तौ व्यञ्जकालोकव्यतिरेकस्याकिञ्चित्करत्वात् इति ॥ यद्वा द्रव्यत्ववाद्यभिमते पूर्वान्वयव्यतिरेकिणि तेजस्येव व्यभिचारादित्यारभ्य संयोगाभावादित्यन्तेनान्वयव्याप्तिं निरस्य व्यतिरेकव्याप्तिं निरस्यति ॥ न चेत्यादिना ॥ यद्द्रव्यं तन्न बाह्यालोकासहकृतचक्षुर्ग्राह्यमिति नियतव्यतिरेकसिद्धिः क्वचिदपि न तेजश्चतुरणुकचाक्षुषसाक्षात्कारस्य तथाभूतालोकसंबन्धव्यभिचारात् । तथाभूतालोकजन्यभिन्नचाक्षुषसाक्षात्कारविषये चतुरणुक एव नियमभङ्गादि-

(१) लोकसम्बन्धव्यतिरेकादिति पा० २ पु० ।

तिरिक्तत्वेन विशेषणीयमिति यदि तर्हि तमोव्यतिरेकेण(१) प्रमाणबलादेव विशेष्यताम् । प्रत्युतैतस्य बाह्यालोकव्यतिरेकसहकृतचक्षुर्ग्राह्यत्वावधारणबलेन पृथिव्यादेर्बाह्यालोकसापेक्षच-

त्यर्थः । नच सौरालोकसंस्कार्यतोक्तेर्न व्यभिचारः । अनारब्धमहासौरालोके तच्चतुरणुके तत्संस्कार्यतानुपपत्तेरिति भावः । ननु हेतौ तेजोव्यतिरिक्तत्वे सतीति विशेषणात्तेजोव्यतिरिक्तद्रव्यभेदस्य साध्यत्वाद्वा न व्यभिचार इत्यत आह ॥ प्रमाणबलादिति । तेजोद्रव्यत्वसाधकप्रमाणबलादित्यर्थः । तर्हि तेजोद्रव्यत्वसाधकप्रमाणबलात्तमोव्यतिरेकेणापि हेतुसाध्ययोरन्यतरद्विशेष्यतां तथा च स्वरूपासिद्धिसिद्धसाधनाभ्यं तन्निरासाय विशेषणत्यागे च व्याप्यत्वासिद्ध्या नाद्रव्यत्वसिद्धिरित्याह ॥ तर्हीति ॥ किञ्च पृथिवीजलवैधर्म्येण बाह्यालोकानपेक्षचक्षुर्ग्राह्यत्वेन तमसो द्रव्यत्वसाधने तेजसानैकान्त्यविरोधयोरन्यतरदावश्यकं तेजोवैधर्म्येण तत्सापेक्षचक्षुर्ग्राह्यत्वेन पृथिवीजलयोरद्रव्यत्वसाधने तु न किञ्चिद्दूषणमिति तदेव साधयितुमुचितमित्याह ॥ प्रत्युतेति ॥ नन्वत्रापि गन्धस्नेहाश्रयद्रव्यान्तरकल्पनाप्रसंगो बाधक इत्यत आह । इन्द्रियेति । न च चक्षुरुन्मीलनान्वयव्यतिरेकानुविधानानुपपत्तिस्तमोग्रहस्य चक्षुःश्रवःश्रोत्रवत्तामसेन्द्रियस्य चक्षुर्गोलकाधिष्ठानत्वात् ॥ न च तद्रूपवस्थापकगुणाभावादसि-

(१) व्यतिरेकेणापीति पा० २ पु० ।

क्षुर्ग्राह्यत्वात् भावत्वं त्यज्यताम् । इन्द्रियान्तरमेव वा तमोग्राहकमस्तु । अत एव तामसादिन्द्रियादन्धतमसेऽपि पेचकादीनां तत्तद्वस्तुग्रहः ॥

स्यादेतत् तमः किं नित्यमनित्यं वा ? आद्ये रूपवतो नित्यस्याचाक्षुषत्वप्रसङ्गः । द्वितीये त्वारभ्यं स्यात् । न च निःस्पर्शद्रव्यस्या(१)रम्भकत्वं द्रव्यसमवायिकारणतायां स्पर्शवद्द्रव्यस्य प्रयोजकत्वात् । न च मूर्तत्वमेव तत्र प्रयोजकं मनसोऽप्यारम्भकत्वप्रसङ्गात् । एतदपि न । रूप-

---

द्धिः । गुणत्वस्य व्यवस्थापकतायामतन्त्रत्वादिन्द्रियान्तराग्राह्यग्रहणमात्रस्य प्रकृतेऽपि सत्वादिति भावः । विपक्षबाधकत्वेन तस्योपयोगान्तरमाह ॥ अत एवेति ॥ आलोकाभावे चक्षुषस्तत्रासामर्थ्यात् इति भावः ॥ न च दिवापि तेषां तद्ग्रहापत्तिः । आलोकस्यैव तमसस्तत्र सहकारित्वात् ।

रूपवत्वहेतोरसिद्धिं शङ्कते ॥ स्यादेतदिति ॥ अचाक्षुषत्वप्रसङ्गादिति । परमाणोरिवेति शेषः । द्वितीये रूपवतोऽनित्यत्वे । आरभ्यमिति । द्रव्यमिति शेषः । अस्तु स्वावयवारब्धन्तम इति आशङ्क्य तेषां स्पर्शवत्वे तदारब्धद्रव्ये तमस्यपि स्पर्शवत्वमित्यभिप्रेत्य निःस्पर्शवत्वे बाधकमाह । न च निःस्पर्शेति । द्रव्यसमवायिकारणत्वं न निःस्पर्शस्येत्यर्थः ॥ तमो न

---

(१) निःस्पर्शस्य द्रव्यस्येति पा० २ पु० ।

वत्वे नित्यत्वेपि त्रुटेश्चाक्षुषत्वाभ्युपगमात्(१) । मनसि मूर्तत्वानङ्गीकारात् । अनुद्भूतस्पर्श एव वा कल्प्यताम् । न चोद्भूतनीलरूपस्योद्भूतस्पर्शसामानाधिकरण्यनियमः पृथिव्यामेव तथात्वात् । एवं रसानुद्भवोपि कल्प्यताम् । तेजो-

रूपवत् स्पर्शवदनारब्धचाक्षुषत्वाज्जातिवदिति पर्यवसितमनुमानम् । त्रुटौ व्यभिचारेण दूषयति ॥ रूपवत्त्व इति ॥ ननु चाक्षुषद्रव्यत्वेन त्रुटौ सावयवत्वसिद्धेर्धर्मिग्राहकमानबलेन च मनोमूर्तत्वसिद्धेर्नैतदिति शङ्कमानं प्रति हेतोर्विशेषणासिद्धिर्वेत्याह ॥ अनुद्भूतस्पर्श एवेति ॥ तमो नानुद्भूतस्पर्श उद्भूतनीलरूपाच्छंखवत् । पित्तधातौ व्यभिचारवारणाय नीलेति । इत्यनुमानमाशङ्क्य साधनावच्छिन्नसाध्यव्यापकपृथिवीत्वोपाधिना दूषयति ॥ न चोद्भूतनीलेति ॥ पृथिव्यामेवेति ॥ अन्यथा पृथिव्यामुद्भूतयो रूपस्पर्शयोः सामानाधिकरण्यनियमावधारणात्तेजस्यप्यन्यतरानुद्भवे अन्यतरोद्भवो न स्यादिति भावः । ननु नीलरूपसमानाधिकरणस्पर्शस्य रसव्याप्यत्वस्यावधारणात्तद्व्यावृत्त्या स्पर्शोपि तमसो व्यावर्ततेत्याशङ्क्याह । एवं रसेति । उपपत्तिसौकर्यादाह ॥ तेजोवदिति ॥ यथा रूपसमानाधिकरणस्पर्शस्य न रसव्याप्यता तथा नीलरूपसमानाधिकरणस्यापि साधनावच्छिन्नसाध्यव्यापकस्य पृथिवीस्पर्शत्वस्य तत्रोपाधित्वादिति भावः ॥ स्वपक्षे साधकमुक्त्वा

(१) चाक्षुषत्वस्वीकारादिति पा० २ पु० ।

वह्नीरसत्वमेव वाङ्गीक्रियतां । तेजोऽभावत्वे तु कथं गत्यादिप्रत्ययः । अभावत्वेनोपस्थिते भावधर्मारोपासम्भवात् । (अन्यथा तदनुपस्थिते भावधर्मारोपासम्भवात्) (१) । न च स्वाभाविकगतेरन्यगत्यनुविधानानुपपत्तिः । आश्रयचलनानुविधानस्य पद्मरागप्रभायामेव दर्शनात् । किंच तेजोत्यन्ताभावरूपत्वे तमसि उत्पन्नव्यवहारो न स्यात् । प्रागभावरूपत्वेपि तथा । ध्वंसत्वेपि विना-

परपक्षे बाधकमाह । तेजोभावत्वे त्विति ॥ भावधर्माणां तेषामभावे प्रमासम्भव इत्यर्थः । नन्वारोपः सम्भवेदित्याशङ्क्य किमभावत्वोपस्थापकसामग्रीसमवधाने गतिभ्रमः तदसमवधाने वेति विकल्प्याद्ये दूषणमाह ॥ अभावत्वेनेति ॥ उपस्थिते उपतिष्ठमान इत्यर्थः । विशेष्यभानस्यारोपाहेतुत्वात् । यद्भानं यत्र प्रतिबन्धकं तत्सामग्र्या अपि तत्र प्रतिबन्धकत्वादिति भावः । द्वितीय आह अन्यथेति ॥ गतिप्रतीतिकाले आलोकाभावार्थकतमःपदोल्लेखादभावत्वान्येन रूपेणानुपस्थितेरवश्यन्तदुपस्थापकसामग्रीसमवधानं पूर्वं वाच्यमिति तेन प्रतिबन्धान्नारोपसम्भव इत्यर्थः ॥ ननु दोषमाहात्म्यादिना सत्यपि विशेषदर्शनेऽप्यारोपोऽभ्युपेयः अन्यथा गतेरन्यगत्यनुविधानानुपपत्तेरित्यत आह ॥ न च स्वाभाविकेति ॥ पद्मरागेति ॥ स्वाभाविकगतेरित्यनुषज्य-

(१) चिह्नस्थपाठः प्रथमपुस्तके नास्ति ।

शित्वं न स्यात्(१)। अन्योन्याभावेपि तथा। अपि च तमसि नीलसाक्षात्कारस्य भ्रान्तत्वे अनीलन्तम इति विपरीतसाक्षात्कारोपि स्यात्। न चायं कदाचिदपि कस्यापि भवति। प्रत्युत योगिनोपि नीलप्रत्यय एव तत्रोन्नीयते। नीलत्वेनाप्रतीयमाने तस्मिन् तमोव्यवहारो न स्यात्। नात्रालोकः किं पुनरन्धकार इति व्यवहाराच्चालोकाभावातिरिक्त एवायमन्धकार इति पूर्वपक्षः॥

ते। विकल्पानुपपन्नमपि तस्याभावत्वमित्याह। किञ्चेति॥ उत्पन्नादीति आदिपदेन ध्वस्तत्वोपग्रहः॥ भ्रमत्वव्यापकविपरीतसाक्षात्काराभावान्नीलसाक्षात्कारो न भ्रम इत्याह। अपि चेति। ननु भ्रमकाले विपरीतसाक्षात्काराभावेपि तद्दर्शनान्न तद्व्यापकत्वं तस्येत्यत आह॥ न चायं कदाचिदपीति॥ नन्वस्त्येव योगिनामनीलप्रत्यय इत्याह॥ प्रत्युतेति॥ सिद्धे भ्रमत्वे विशेषदर्शित्वाद्योगिनां विपरीतप्रत्ययकल्पनं तस्माच्च भ्रमत्वसिद्धिरित्यन्योन्याश्रयादिति भावः। नन्वस्माकमेवास्त्यनीलप्रत्ययस्तमसि आत्मन्यालोकाभावात्मकतमःप्रतीतेर्नीलोल्लेखित्वाभावादित्यत आह॥ नीलत्वेनेति॥ सहप्रयोगानुपपत्त्यापि नालोकाभावस्तम इत्याह नात्रालोक इति॥

(१) ध्वंसत्वे विनाशित्वं नेति पा० २ पु०।

अत्रोच्यते ॥ यद्यपि भावत्वतन्नियतधर्मप्रकारिका प्रतीतिस्तमोविषयानुभवसिद्धा तथापि तेजोव्यतिरिक्तभावगोचरचाक्षुषसाक्षात्कारस्य विषयसंस्कारकबाह्यालोकापेक्षानियमावधारणबलेन भ्रान्तत्वकल्पनमेव युक्तम् (१)। न च तेजोव्यतिरेकवत्तमोव्यतिरेकेण विशेषणीयमिदं। तेजोद्रव्यत्वस्यानन्यथासिद्धप्रमाणावधृतत्वात्। न च तमोव्यतिरेक एव तेज आस्तामिति वाच्यम्।

सिद्धान्ताभिधानं प्रतिजानीते॥ अत्रोच्यत इति॥ पूर्वपक्षरहस्यं निरस्यन्ननुवदति यद्यपीति। प्रतीतिर्यथासम्भवमनुमितिप्रत्यक्षादिरूपा। व्यापकानुपलम्भबाधेन निरस्यति॥ तथापीति॥ यदुक्तं तथात्वे प्रमाणाभावादिति तदसिद्धमित्याह। तेजोव्यतिरिक्तेत्यादिना। तेजोभावे व्यभिचारवारणाय भावेति। तेजसि व्यभिचारवारणायाह तेजोव्यतिरिक्तेति। घटादिस्पार्शनसाक्षात्कारे व्यभिचारवारणाय चाक्षुषेति। तेजःसाक्षात्कारे विषयस्य तेजसोपेक्षणादाह विषयसंस्कारकेति। स्वस्य च स्वासंस्कारकत्वादिति भावः। चक्षूरूपस्य तेजसश्चाक्षुषसाक्षात्कारमात्र एवापेक्षणादाह॥ बाह्येति॥ इन्द्रियभिन्नेत्यर्थः॥ युक्तमिति॥ लाघवादिति शेषः। तस्यास्तमसि भावधर्मप्रतीतेः। तेजःप्रतिबन्दिं निरस्यति॥ नचेति॥ अन्यथेति॥ उष्णस्पर्शादेराश्रयान्तरासिद्धेरित्यर्थः। विनिगमकाभावात्तेज एव तमोभावोऽस्तु इत्य-

(१) युक्तं तस्याः प्रतीतेरिति पा० २ पु०।

तथा सत्युष्णस्पर्शभास्वररूपाश्रयद्रव्यान्तरकल्पनापातात्। अन्यथा कस्यारोपस्तेजसि स्यात्। तमसि तु क्लृप्तस्यैव नीलरूपादेरारोप इति न कल्पनागौरवम्। न च तमोभावत्वग्रहायत(१)तेजोपेक्षैव सङ्कोच्यतामिति वाच्यम्। तथा सति गौरवप्रसङ्गात्। तथा हि। तमो द्रव्यान्तरं कल्पनीयम्।

विज्ञाताशयशङ्कामुद्धाटयन्निरस्यति ॥ न चेति ॥ कल्पनेति ॥ ततश्च गौरवमिति भावः ॥ त्यज्यतां तर्हि सेत्यत आह ॥ अन्यथा कस्येति ॥ धर्माणामिति शेषः ॥ तादात्म्यारोपाभिप्रायेण यथाश्रुतमेव वा योज्यम्। ननु प्रकृते रूपादिप्रतीतेरसति बाधके प्रमात्वात्तमसो भावत्वं प्रकल्प्यालोकापेक्षा सङ्कोच्यतामुत तेजोव्यतिरिक्तभावचाक्षुषसाक्षात्कारे आलोकस्य जनकतावधारणबलेन भावत्वं त्यज्यताम्। अन्त्ये रूपपरिमाणगत्युत्पत्तिविनाशादिप्रत्ययानां भ्रान्तत्वं कल्प्यम्। अभावत्वेन प्रतीयमाने क्वचिदक्लृप्तो भावधर्मारोपश्च। तद्वरमेकव्याप्तिसङ्कोचमात्रकल्पनमित्याशङ्क्याह ॥ न च तमोभावत्वे त्विति। गौरवेति ॥ तमोव्यतिरिक्तत्वविशेषणप्रक्षेपे प्रामाणिकगौरवप्रसङ्गादित्यर्थः ॥ तेजोद्रव्यानङ्गीकारे त्वौष्ण्यादिबुद्ध्यनुपपत्तेस्तेजोव्यतिरेकविशेषणे प्रामाणिकं गौरवम्। न च तमोव्यतिरेकविशेषणानङ्गीकारे तस्याभावत्वप्रसक्तौ पूर्वगौरवद्वयं तस्य फलमुखत्वादिति भावः ॥ यदि तादृशोपि गौरवादभावत्वत्यागस्तदा विशे-

(१) ग्रहात् नियतेति पाठा० २ पु०।

तत्र रूपवत्त्वेपि निःस्पर्शवत्त्वकल्पनम्। उद्भूत-नीलरूपवत्त्वे चानुद्भूतस्पर्शवत्त्वम्। निःस्पर्शस्य वा कथमारम्भकत्वम्। तत्र स्पर्शवद्द्रव्यत्वस्य प्रयोजकत्वात्। मूर्तत्वापेक्षया तस्य लघुत्वात्। आलोकाभावव्यङ्ग्यत्वमधिकमेव कल्पनीयम्।

पक्षप्रक्षेपे तदप्यधिकमस्त्येवेत्याशयेन गौरवान्तरमुपन्यस्यति ॥ तथाहीति ॥ रूपवत्त्वेप्यस्पर्शवत्त्वमस्पर्शस्याप्यारम्भकत्वम् आलोकाभावव्यङ्ग्यत्वं चेति गौरवत्रयम्। उद्भूतनीलरूपस्यानुद्भूतस्पर्शत्वमालोकाभावव्यङ्ग्यत्वं चेति द्वयमिति पक्षभेदेन द्रष्टव्यम् ॥ स्पर्शवदिति ॥ स्पर्शवदन्त्यावयवित्वस्येत्यर्थः ॥ ननूक्तं मूर्तत्वमेव तत्र प्रयोजकमित्यत आह ॥ मूर्तत्वेति ॥ इयत्तावच्छेदविशेषितपरिमाणत्वोपाध्यपेक्षया स्पर्शवत्त्वस्य जातित्वेनाखण्डत्वादिति भावः॥ ननु तथापि वेगवत्त्वं क्रियावत्त्वं वा तत्र तन्त्रमस्तु स्पर्शवत्त्वतुल्यत्वात्। मनस्तु नारम्भकम्। वेगक्रिययोस्तत्र परैरनङ्गीकारात्॥ स्वमतेपि मनसः क्रियावत्त्वेपि तदारभ्यत्वाभिमतस्य प्रतीयमानतया प्रतीयमानधर्माश्रयतया वा पुरुषार्थसाधनत्वादर्शनादनारम्भकतोपपत्तेस्तमसश्च तद्दर्शनादारम्भकतोपपत्तेरिति चेत् न नित्यस्य स्वरूपयोग्यस्य फलोपधाननियमेन मनसोप्यारम्भकत्वस्य दुःपरिहरत्वात्। अन्यथा द्रव्यत्वादेरेवारम्भकताप्रयोजकत्वप्रसङ्गात्। पूर्वोक्तगौरवे वा तात्पर्यात् ॥ न केवलमक्लृप्तकल्पना किन्तु क्लृप्तविरुद्धकल्पनापीत्याह। आलोकेति॥ नन्वेवं तमस्तेजोवैधर्म्यात् पृथिव्यादीनामभावत्वापत्तिरित्यत आह ॥ न च पृथिव्यादीना-

न च पृथिव्यादीनामप्येवमभावत्वापत्तिरिति वाच्यम्। तत्र गन्धादेरनन्यथासिद्धस्य गुणस्य द्रव्यत्वव्यवस्थापकत्वात्। तमसस्तु न तथाभूतो गुण उपलभ्यते उपलभ्यमानस्त्वन्यथासिद्ध एव। कथं वा विशेषगुणयोग्यतामन्तरेण प्रत्यक्षमूर्तत्वमप्यस्य। भावधर्मारोपोऽप्यभावत्वानुपस्थितिदशायामुपपद्यते। अभावत्वानुपस्थितिस्तु दोषव-

मिति॥ अनन्यथेति॥ स्वाश्रयद्रव्यकल्पनामन्तरेणानुपपन्नप्रतीतिकस्येत्यर्थः। गुणादौ व्यभिचारवारणायाह मूर्तत्वमिति। तथा च व्यापकानुपलब्धिबाधितं तमसो भावत्वमिति भावः। रूपाद्यारोप्यकोटिविपरीतकोटिव्याप्याभावत्वरूपविशेषदर्शने कथं रूपाद्यारोप इति पूर्वपक्षे परिहारमाह॥ भावधर्मारोपोपीति॥ यद्यपि नीलन्तम इत्यालोकाभावत्वघटितप्रवृत्तिनिमित्तक(१)-तमःपदोल्लेखेऽभावत्वानुपस्थित्यभिधानमयुक्तं तथापि न विद्यन्ते भावा रूपपरिमाणगत्यादयोऽस्मिन्नित्यभावं तत्त्वेना(२)नुपस्थितिदशायां आरोप्यरूपादिराहित्येनानुपस्थितिदशायामित्येवात्र विवक्षितम्। अयं भावः। यद्विशेषदर्शनाभावे यो भ्रमः स तद्विशेषदर्शननिवर्त्यः। न च नीलारोपोऽभावत्वविशेषदर्शनाभावजन्यः येन तद्दर्शने न स्यात्। नीलन्तम इति प्रतीतेः सर्वसिद्धत्वात्। किन्तु नीरूपत्वादिप्रत्यक्षाभा-

(१) प्रवृत्तिकेति पाठा० २ पु०।

(२) न्नित्यभावेत्वेनेति पा० २ पु०।

शादेव समर्थनीया। दोषस्तु तथा वस्तुस्वरूपमेव। अदृष्टादिकमेव वा । पद्मरागप्रभायां चलनबुद्धे-राश्रयचलनानुविधायितानियमो नास्त्येव । का-

वहेतुक इति तत्प्रत्यक्षे परं न भवेत् । एवं च तथा पीतत्वाभावव्याप्यशंखत्वदर्शनं सदपि न विरोधि । यत्र विरोध्यपीतत्वप्रत्यक्षं तद्दोषप्राबल्यान्नास्तीति भवति पीतः शङ्ख इति भ्रमः । एवमिहाप्यालोकाभावत्वदर्शनं सदपि न विरोधि विरोधि वा नीलप्रत्यक्षं नास्त्येव दोषप्राबल्यादिति युक्तो भ्रमः॥ नन्वेवं दोषस्यानियतत्वात्तदपगमे कदाचिदनीलप्रत्ययप्रसङ्ग इत्यत आह । दोषस्तु वस्तुस्वरूपमेवेति ॥ अस्मिन्पक्षे वस्तुस्वरूपस्य(१) प्रमातृमात्रसाधारण्याद्योगिनोपि नीलप्रत्यय एवोन्नीयत इति ज्ञेयम् ॥ अदृष्टादिकमेव वेति॥ आरोपहेतुकसुखाद्यनुभावकादृष्टादिकमेव वेत्यर्थः । आदिपदेन भ्रमप्रयोजकप्रबलनीलसंस्कारपरिग्रहः । अत्र च पक्षद्वये योगिनां तत्सत्तानियमे प्रमाणाभावान्नीलप्रत्ययाभावोपपत्तिः । इदमेव च पक्षद्वयमभिप्रेत्य योगिनोपि नीलप्रत्यय एवोन्नीयत इति निरस्तमिति वक्ष्यति ॥ यदुक्तं स्वाभाविकगतेरपि पद्मरागप्रभावदन्यगत्यनुविधानमुपपद्यत इति । तत्र दृष्टान्तं विघटयति । पद्मरागादिप्रभायामिति । कारणवशात्कुड्याद्यावरणविगमवशात् ॥ ननु तमसोपि नान्यगत्यनुविधाननियमः । स्थितेपि स्तम्भादौ प्राक्पश्चाद्दीपसम्बन्धादिना छायाचलनोपलम्भात् । कुड्यादिनाऽप्राप्तपरभागायाश्छायायास्तदपगमे

(१) वस्तुस्वरूपस्य दोषस्येति० पा० २ पु० ।

रणवशादन्यत्रापि तथा चलनोपलम्भात्। यद्वा तमो यदि गतिमत्स्यात् तेजोभावाविषयकचाक्षुषसाक्षात्काराविषयो न स्यात्। तथा तमो यदि

---

परभागप्राप्तिदर्शनाच्चेत्यस्वरसादाह। तमो यदि गतिमत्स्यात् तेजोभावाविषयकचाक्षुषसाक्षात्काराविषयो न स्यात् इति। अत्रालोकाजन्यचाक्षुषसाक्षात्कारविशेष्यं पक्षः तेन तमःसंज्ञकस्य पक्षो पक्षतया न विपर्ययपर्यवसानं अतो बाधः। गतिमत्वं च समवायेन गत्यधिकरणत्वं तेन न कालादौ व्यभिचारः। न वा चोरादिगत्यधिकरणे तमसि बाधेन विपर्ययापर्यवसानं। साक्षात्काराविषयो न स्यादित्युक्ते आपाद्याप्रसिद्धिः साक्षात्कारविषयित्वस्य केवलान्वयित्वात्। लौकिकत्वेन साक्षात्कारविशेषणे चेष्टापत्तिरतस्तेजोभावाविषयकेति साक्षात्कारविशेषणम्॥ तत्राप्यभावपदस्य भावाभावसाधारणाभावपरतयाऽऽपाद्यविपर्ययहेतावप्रसिद्धिस्तद्वारणाय तेजःपदम्। आकाशाद्यभावाविषयसाक्षात्काराविषयत्वाभावस्य तमस्यपि सत्वात् इष्टापत्तिवारणाय तदिति तु मन्दम्। आद्यनञा सामान्याभावविवक्षायामिष्टापत्त्यसम्भवात्। तदविवक्षायां तु सत्यपि तेजःपदे यत्किञ्चित्तेजोभावमादायेष्टापत्त्यपरिहारात्। एतेन सामान्याभावानङ्गीकर्तृमते नैतदित्यपि प्रत्युक्तम्॥ अन्ये तु घटाभावाभावरूपे घटेऽभावाविषयसाक्षात्काराविषये व्यभिचारवारणाय तेजःपदमित्याहुः। तदपि मन्दम्। अभावपदेनात्राभावैकस्वभावस्य न्यायोपादानत्वात्। अन्यथाऽभावाविषयत्वाप्रसिद्ध्याऽऽपाद्याप्रसिद्धेः। घटतेजोभावाविति

समूहालम्बनविषये व्यभिचारवारणायाद्य नञ्द्वयम् । घटे च तेजोभावविषयकसाक्षात्कारविषयत्वेपि घटोयमिति तद्विषयसाक्षात्कारविषयत्वमप्यस्तीति न व्यभिचारः ॥ ननु तेजोभावविषयकसाक्षात्काराविषयः स्यादित्येवास्तु । न च व्यभिचारः घटोयमिति साक्षात्कारविषयतादशायां तेजोभावविषयकसाक्षात्काराविषयत्वस्य पर्युदासवृत्त्या लभ्यस्य सत्त्वादिति चेत् न तेजोभावविषयसाक्षात्कारविषयान्यत्वस्य च पर्युदासलभ्यस्य घटादावसत्त्वेन व्यभिचारानुद्धारान्नञ्त्रयोपादानात् । तेजोभावविषयसाक्षात्कारभिन्नसाक्षात्कारविषयत्वस्य च पर्युदासालाभात् । भावमुखस्य तस्य विवक्षितमात्रस्यापाद्यान्तरत्वेनावधारणात् । न च तथापि समूहालम्बनविषयतादशायां घटतेजोभावाविषयकबुद्ध्यविषयत्वमस्तीति व्यभिचारान्न निस्तार इति वाच्यम् । अविषयपदेन विषयभिन्नस्योक्तत्वात् । ननु समस्तोपादानेपि मनसि व्यभिचारावक्रोक्तिवैयर्थ्यं च तेजोभावाविषयसाक्षात्कारविषयः स्यादित्यस्यापि सुवचत्वात् इति चेत् न मनोव्यभिचारनिरासायैव तदादरात् । तथाहि आपाद्यतेजोभावाविषयसाक्षात्काराविषयत्वाभावो द्विधा । तेजोभावाविषयसाक्षात्कारविषयत्वाद्वा तेजोभावविषयकसाक्षात्काराविषयाद्वा । तत्राद्यं प्रकारमादाय घटादौ व्यभिचारवारणम् । द्वितीयप्रकारस्य घटतेजोभावाविति समूहालम्बनविषयत्वेन तत्रासम्भवात् । मनसि च द्वितीयप्रकारमादातमसि तूभयमप्यनिष्टमिति । तेजोभावविषयकसाक्षात्काराविषयो न स्यादित्युक्ते त्विष्टापत्तिः । तमःपद-

जन्यतेजोभावाविषयबुद्धयविषयत्वाभावेनेष्टापत्तिवारणाय साक्षात्कारपदम्। कश्चित्तु चाक्षुषं तमो यदि चाक्षुषगतिमत्स्यात् आलोकव्यङ्ग्यं स्यात् इत्यत्र तात्पर्यं वक्रोक्तावभिरुचिमात्रमित्याह। क्वचित्पुस्तके तमो यदि गतिमत् स्यात् तेजोभावविषयसाक्षात्कारविषयो न स्यादिति पाठः। तत्रापि तेजःपदप्रयोजनं पूर्ववदेव। नन तेजोभाववायू इति स्पार्शनसाक्षात्कारविषये वायौ भट्टमते मूलशैथिल्यम् गृहाङ्गणयोस्तेजोभावघटाविति साक्षात्कारविषये घटादौ स्वमतेपि। अत्राहुः विषयेण साक्षात्कारो विषयसाक्षात्कारः साधनं कृतेति समासः। आलोकाभावे विषयसाक्षात्कार आलोकाभावविषयसाक्षात्कारः। स च चाक्षुषो विवक्षितः। तेनालोकाजन्यविषयजन्यचाक्षुषसाक्षात्कारविषयो न स्यादिति पर्यवसितम्। तत्रालोकाजन्यपदेन घटादौ व्यभिचारनिरासः। चाक्षुषपदेन परमते वायौ। विषयजन्यपदेनालोकाभावकालीनप्रमेयत्वप्रकारकचाक्षुषसाक्षात्कारविषयघटादावेव व्यभिचारनिरासः। नन्वेवमपीदृशबिडालोलूकादिचाक्षुषसाक्षात्कारविषये तत्रैव व्यभिचारः। न च मानुषेति विशेषणाददोषः। अञ्जनादिसंस्कृततस्करादिचक्षुर्जन्यसाक्षात्कारविषयतया तत्रैव व्यभिचारतादवस्थ्यादिति चेत् न। तत्रापि विषयसंस्कारकालोकस्य फलबलेन कल्पनात्। न च तस्यानुद्भूतरूपत्वे संस्कारकतापत्तिः। उद्भूतरूपत्वे च तैरिवान्येनापि तद्ग्रहापत्तिरिति वाच्यम्। नयनगतापत्तधातुवत् प्रतिनियतपुरुषग्राह्यतोपपत्तेरिति। ननु तमसस्तेजोभावाविषयसाक्षा-

तेजोऽभिन्नत्वे सति गतिमत्स्यात् तेजोविषयक-
चाक्षुषसाक्षात्कारविषयकगतिमत्स्यादित्यत्र ता-

त्काराविषयत्वाभावापादने इष्टापत्तिः । तमोद्रव्यत्ववादिमते आलोकाभावव्यङ्ग्यस्यापि तमसः साक्षात्कारे आलोकाभावस्याविषयत्वात् । न हि व्यङ्ग्यप्रतीतौ व्यञ्जकभाननियमः । घटादिचाक्षुषसाक्षात्कारे व्यञ्जकालोकोल्लेखनियमे आलोकवान्घट इत्येव तदाकारप्रसङ्गात् । गवादिप्रतीतौ सास्नादेर्विषयत्वप्रसङ्गाच्चेत्यस्वरसादाह तथा तमो यदीति । तेजो न विषयो यस्य चाक्षुषसाक्षात्कारस्य तदविषयगतिः स्यादित्यर्थः । अत्र नञ्द्वयानुपादाने मनसि मूलशैथिल्यम् । तेजस्तमसी चलत इति समूहालम्बनविषयतया तमसीष्टापत्तिश्चेति यथोक्तम् । न चैवमप्युक्तसमूहालम्बनदशायामिष्टापत्तिः उत्तरनञः प्रसज्यप्रतिषेधार्थत्वात् । चाक्षुषपदं च तेजोविषयकस्पार्शनसाक्षात्कारविषयगतौ घटादौ व्यभिचारवारणाय । न च तेजोविषयताशून्यचाक्षुषसाक्षात्कारविषये घटादौ व्यभिचारः । तेजोऽजन्यत्वस्यैव तदर्थत्वात् । अत एव पूर्वास्वरसनिस्तारोपि । चक्षुषैव तेजसाजन्ये(१) कथं तेजोऽजन्यत्वमिति चेत् न विषयसंस्कारकतेजस एव तेजःपदार्थत्वात् । अत एव तेजसि व्यभिचारवारणायापादके तेजोभिन्नत्वविशेषणम् । गतिमत्पदं संपातायातम् न त्वा-

(१) चक्षुषि च तेजसाजन्ये इति पा० २ पु० ।

त्पर्यात् । न च प्रतियोगिग्रहानुपपत्तिः । सर्वत्र तथाकल्पनात् । तमोव्यवहारस्तु प्रौढ-प्रकाशकतेजस्संसर्गाभावनिबन्धन एव दोषवशा-

---

पाद्यो विवक्षितं । शिष्टं पूर्ववत् । अपरे तु नञ्द्वयरहितमापाद्यं मत्त्वा चाक्षुषपदव्यत्ययमाहुः । नन्वभावत्वपक्षे देशकालविप्रकृष्टस्य तेजोमात्रस्यासर्वज्ञेन दुर्विज्ञानतया कथं तत्प्रतियोगिकतमोबुद्धिः स्यादित्याशङ्क्याह । न चेति । सर्वत्रेति । सामान्यलक्षणादिना सकलप्रतियोग्युपस्थितेः सामान्याभावप्रतीतिमात्रसाधारण्यादिति भावः । ननु तेजोभावस्य तमस्त्वे दीपवत्पथि सौराद्यालोकाभावमादाय तमोव्यवहारः स्यादित्यत आह तमोमात्रेति । अन्योन्याभावव्यावृत्त्यै संसर्गेति । यत्किंचित्तेजस्संसर्गाभावव्यावृत्त्यै यावदिति । सोष्मणि तमस्यव्याप्तिनिरासाय प्रकाशकेति ॥ न चोष्मणोपि प्रत्यासत्तिविधया स्वस्पर्शप्रकाशकत्वमस्त्येवेति वाच्यम् । उद्भूतानभिभूतरूपत्वस्यैव तदर्थत्वात् । एतेन प्रकाशकता ज्ञानजनकतेति ज्ञानरूपाचाक्षुषघटितप्रतियोगिकत्वात्तमसः चाक्षुषत्वानुपपत्तिरित्यपास्तम् । प्रभासंवलिते छायातमसि अव्याप्तिवारणाय प्रौढेति ॥ प्रौढिरुद्भूतानभिभूतस्पर्शता । अत्र तमःस्वरूपं योग्योद्भूतरूपप्रत्येकतेजस्संसर्गाभाव एव । व्यवहारः परं यावदन्तर्भावप्रयुक्तः । न च प्रत्येकं तमस्त्वे यत्किञ्चित्तेजसि सत्यपि तेजोन्तराभावमादाय तमोव्यवहारः स्यादिति वाच्यम् । कार्यदर्शनबलेन तेजोन्तरस्य प्रतिबन्धक-

